## GURUKULA KANGRI

### THE SHRINE OF SWAMI SHRADHANAND.

(By Pandit Chamupati.)

Gurukula at Kangri I call the [shrine] of Shardhananda. Somehow every grain of sand lying in the spacious [roa]ds, vast quadrangles, beautiful cor[ri]dors and foot-paths of this marvellous [instit]ution, the buildings of which are [now] alas! a wreck, on account of [recen]t floods, bears the impress of the soul [of tha]t martyred Sanyasi. To the eye of [imag]ination that imposing figure, majestic [as th]e Himalayas, seems yet to move in [it. T]he, in one of the final outpourings of [his] affectionate heart, termed his "pet [instit]ution." The greater, the most valu[able] part of his life he spent in rearing this unique educational edifice. To us [it wa]s his child, to him it was, as he used [to s]ay, his mother. He came professedly [to t]each; in reality, as he himself felt, to [lear]n: The children of the nation were, [as h]e many a time said, his most instruc[tive, th]e his most inspiring study.

The follower of Balbrahmachari, [h]e found strength inestimable in the con[serv]ation of his vital energy, and had in [t]hi personal acquisition a vision, as it [we]re, of the resuscitation of his fallen [nat]ionon, the basis of self-restraining *tapas*. [In] his address as chairman of the Re[cep]tion committee of the Amritsar-[Congress] he delivered a homily of edu-

## ANOTHER VARSITY IN MAD[RAS]

### OF UNITARY [TYPE]

### PRINCELY OFFER OF 20 L[AKHS]

Madras, Ma[rch]

Sir Annamalai Chetti has o[ffered] lakhs worth of property att[ached to] Sri Minakshi College, Chidamb[aram for] the formation of a unitary unive[rsity call]ed Sri Minakshi University.

It is understood that if th[e Govern]ment accept the proposal, it w[ill give] an annual recurring grant of [...] Decision will be taken before [...] a bill piloted in the course o[f ...]

### PICKETING BY ME[N]

### SEQUEL TO LILOOAH [...]

Calcutta, [...]

The Lilooah workshopmen now idle following the closi[ng of the work]shops, took one step forwar[d in] the execution of their threa[tened] action. They resorted to [...] Howrah General Stores and [...] workshops. Some of the[m ...] the river in boats.

The Agent, E. I. Rail[way ...]

# विदग्धमुखमण्डनम्

( संस्कृतटीकोपेतम् )

प्राप्तिस्थानम्—

मेहरचंद्र लक्ष्मणदास

संस्कृत पुस्तकालय,

सैदमिट्ठा बाज़ार, लाहौर ।

श्रीः

श्रीधर्मदाससूरिविरचितम्—

# विदग्धमुखमण्डनम्

द्रोणाश्रमाभिजनेन पण्डितवर-श्रीमदच्युतानन्दशर्म-
तनुजनुषा—
लवपुरीयसनातनधर्म-कालेज-संस्कृतविभाग-
प्रधानपण्डितेन श्रीपरमेश्वरानन्दशर्मणा
संपादितं सरलस्वोपज्ञटीकया
सनाथितं च ।

तदिदम्
मेहरचन्द्र लक्ष्मणदास
'अध्यक्ष—संस्कृतपुस्तकालय लाहौर'
इत्यनेन
भारद्वाजयन्त्रालये 'सैदमिट्ठा बाजार' लवपुरे
सुन्दरसीसकाक्षरैः मुद्रयित्वा प्रकाशितम् ।



सन् १९२८

# भूमिका।

उत्तममध्यमाधमभेदेन काव्यं त्रिविधमिति काव्यविदः। अधमस्यापि शब्दचित्रार्थचित्रभेदेन भेदद्वयम्, तत्रार्थचित्रमुपमादिबहुभेदमलङ्कारशास्त्रालङ्कर्मीणैः श्रीमदप्पदीक्षितादिभिस्तत्र तत्र व्याख्यातम्। शब्दचित्रस्यापि यमकानुप्रासादयो बहवः प्रकाराः, तत्र प्रहेलिकादयः शब्दचित्रभेदाश्चतुष्परिच्छेदात्मकेऽत्र विदग्धमुखमण्डने ग्रन्थकृता सविस्तरं निरूपिताः। यद्यपि विलम्ब्यार्थप्रत्यायनेन रसोद्बोधविरोधित्वान्नैषां सहृदयहृदयावर्जककाव्यश्रेणौ गणना। अत एव प्रकाशकृता काव्यान्तर्गडुभूता इत्युपेक्षिताः, पण्डितराजेन च पामरश्लाघ्या इति तीव्रमाक्षिप्ताः, तथापि—

> क्रीडागोष्ठीविनोदेषु तज्ज्ञैराकीर्णमन्त्रणे
> परव्यामोहने चापि सोपयोगाः प्रहेलिकाः।

इति महाकविदण्डिवचनानुसारेण गोष्ठीषु कथंचिदुक्तिवैचित्र्येण सचेतसां चतांसि रञ्जयन्त्येव। प्रकृतदण्डिकारिकायां प्रहेलिकापदं सर्वेषां व्यस्त-समस्तादिपृष्टभेदानामुपलक्षणम्। तदेवं शब्दालङ्कारनिरूपणपरत्वेनालङ्कारशास्त्र एवास्य विदग्धमुखमण्डनस्यान्तर्भावः।

अस्य कर्ता श्रीधर्मदाससूरिः, स च बौद्ध इति ग्रन्थादौ मङ्गलपद्ये शौद्धोदनिकीर्तनादेव विज्ञायते। किं च ग्रन्थसमाप्तौ ग्रन्थकारः स्वयमेव "सौगतस्य तपस्विनः" इत्येवमात्मानं विशिंषन् स्वस्य सुगतानुयायित्वं द्रढयति, "बुद्धः पायादपायतः" इति बुद्धकर्तृकरक्षणाशंसनपरेण चतुर्थपरिच्छेदपठितसप्तदशपद्यांशेनापि निरुक्त एवार्थ उपोद्वल्यते। ताराचन्द्रस्तु "जैनकृतेऽस्मिन् ग्रन्थे" इत्येवं स्वटीकामुपसंहरन् धर्मदासस्य जैनत्वमभिमनुते, "इति धर्मदाससूरि

विरचिते" इति प्रतिपरिच्छेदावसानवाक्ये सूरिपदप्रयोगोऽपि कथंचित् तत्पक्षमेव समर्थयते, विद्वत्पर्यायसूरिशब्दस्य प्रायेण जैनविद्वन्नामोपपदतयैव दर्शनात् । किं च "जिनः सर्वात्मना सेव्यः पदमुच्चैरभीप्सता" इति जिनस्तुतिरपि प्रकृतग्रन्थस्य जैनकृतत्वपक्षसध्रीचीना । अपि च स्वयं धर्मदासः "भिक्षवो रुचिराः सर्वे" इति पद्यं व्याचक्षाणः "भिक्षवः श्वेताम्बराः" इत्येवमुदलिखत्, श्वेताम्बरा जैनसम्प्रदायस्यैवैकतरो भेदः, न हि बुद्धबुद्ध्यनुसारिणो भिक्षवः श्वेताम्बरा भवन्ति, तदेवं धर्मदास ऐतिहासिकानां संशयदोलामधिरूढः खेलति, न ज्ञायते सौगतीमार्हतीं वा गतिमनुहरति । उपक्रमोपसंहाराभ्यां त्वस्य सौगतत्वमेव निश्चिन्मः। ताराचन्द्रोक्तजैनशब्दस्तु "माराजिल्लोकजिज्जिनः" इति त्रिकाण्ड्यां बुद्धनामसु जिनशब्दस्यापि दर्शनाद् बौद्धपरकतयापि व्याख्यातुं शक्यते । आस्ताम्, कृतमनया काकदन्तपरीक्षया । क्व वास्तव्योऽयमिति तु नाद्यापि सम्यङ्निर्णीतम्, तथापि मगधेषु कियन्तं कालमवश्यमयं न्यवात्सीदिति तु शक्यते वक्तुम्, यतोऽनेन तत्र तत्र मगधानां तत्रत्यबौद्धविहारवासिभिक्षुकाणां च शीलसद्वृत्तादिकं साधु प्रशंसितम् । अस्य समयश्च खिष्टप्रयाणादनु त्रयोदशशताब्द्याश्चरमचतुर्थभागात् पूर्वमिति केचनैतिहासिकाः । अपरे तु अमरकोशीयरायमुकुटटीकायां शार्ङ्गधरपद्धतौ चास्योद्धरणाद् चतुर्दशशताब्दीतः प्रागस्य कालमाकलयन्ति ।

अधस्तादुपदर्शिता अस्य बह्व्यः प्राचीनाष्टीकाः सन्ति ।

१—ग्रन्थकाररचितातिसंक्षिप्ता ।

२—जिनप्रभसूरिविरचिता ।

३—आत्मारामविनिर्मिता ।

४—विद्वन्मनोरमा ताराचन्द्रसमुल्लासिता ।

५—श्रवणभूषणाख्या नरहरिभट्टकृता।
६—सुबोधिनी त्रिलोचनपण्डितसमुद्भाविता।
७—शिवचन्द्रविलिखिता।
८—दुर्गादाससमुद्भासिता।
९—कुञ्जिका रामप्रपन्नशास्त्रिसंकलिता ( नवीना )

एतत्पुस्तकसम्पादनसमये मया दयानन्दैङ्ग्लोवैदिक-कालेजीय ( D. A. V. College ) लालचन्द्रपुस्तकालयाद् उक्तकालेजान्वेषणविभागाध्यक्षस्य संस्कृतसाहित्यगवेषणा पण्डितस्य सुहृद्वरश्रीभगवद्दत्तमहोदयस्य परमया कृपया हस्तलिखितं पुरातनं पुस्तकपञ्चकमधिगतम्। यत्कृते परं चिरं चास्मि कृतज्ञस्तस्य महोदयस्य। तत्रैकं कायस्थ-पण्डितताराचन्द्रविनिर्मितविद्वन्मनोरमासनाथम्, अवशिष्ट-चतुष्टयं तु निष्टीकमासीत्। मूलमात्रेष्वन्यतममेकादशपृष्ठा-त्मकमतिशुद्धपाठं पुस्तकमाधारीकृत्य प्रकृतसंस्करणमिदं मया सरलस्वोपज्ञटीकया सनाथीकृत्य संपादितम्। पाठ-कानां मनोरञ्जनाय प्रहेलिकापन्हुत्यादीनां हिन्दीभाषोदाहर-णान्यपि यथास्मृति तत्र तत्र टिप्पण्यां सन्निवेशितानि, तृतीय-परिच्छेदोदाहृतानां चक्रादिबन्धानामुद्धारचित्राणि तत्तदुदाह-रणावसर एव प्रदर्शनीयान्यपि कैश्चिदनिवार्यान्तरायैस्तथा-कर्तुमशक्नुवतां प्रकाशकमहोदयानां सम्मत्या पुस्तकान्ते नियोजितानि। आशास्यत एतेन मम प्रथमप्रयासेन दोषबहुलेनापि सहृदयानामवश्यं कश्चन संतोषो जनिष्यते। एतच्छोधनविधौ मच्छिष्यान्यतमेन श्रीगणेशमणिशर्मशास्त्रि-णापि साहाय्यमाचरितमिति सोपि महोदय आशीर्भिरभियो-ज्यते। श्रीरामप्रपन्नशास्त्रिसंकलिता कुञ्जिकापि क्वचिट्टीका-विधौ दत्तहस्तावलम्बा इति तेभ्योऽपि कृतज्ञतां प्रकाशयामः।

निवेदकः परमेश्वरानन्दशर्म्मा।

# विषयसूचिका ।

॥ श्रीः ॥

बौद्धश्रीधर्मदाससूरिविरचितम् ।

# विदग्धमुखमण्डनम्

सटीकम् ।

## प्रथमः परिच्छेदः ।

सिद्धौषधानि भवदुःखमहागदानां
पुण्यात्मनां परमकर्णरसायनानि ।
प्रक्षालनैकसलिलानि मनोमलानां
शौद्धोदनेः प्रवचनानि चिरं जयन्ति ॥१॥

जयन्ति वचसां देव्याः कारुण्याञ्चितदृक्कराः ।
यानालम्ब्य विजृम्भन्ते प्रतिभानीरजाकराः ॥ १ ॥
यत्कृपालवमाप्तानामनिरुद्धा सरस्वती ।
मनस्तमस्तिरयतात् साऽनिरुद्धसरस्वती ॥ २ ॥
जयन्ति कवयोऽतीता येषां वाचः सुधामुचः ।
अद्याप्यानन्दसंदोहं दुहते शेमुषीजुषः ॥ ३ ॥
सर्वतन्त्रस्वतन्त्राणां गुरूणां चरणावहं ।
प्रणम्य टीकां कुर्वेऽस्मिन् विदग्धमुखमण्डने ॥ ४ ॥

प्रारिप्सितनिर्विघ्नपरिसमाप्तिकामः शिष्टाचारपरम्पराप्राप्तं ग्रन्थादौ मङ्गलमाचरति—**सिद्धौषधानीति**—भवे जगति, यानि दुःखानि आध्यात्मिकादित्रिविधतापाः, तान्येव महान्तो गदा रोगाः, तेषां विनाशाय सिद्धानि फलाव्यभिचारीणि,

औषधानि, पुण्यः पवित्रः, आत्मा अन्तःकरणं, येषां ते पुण्यात्मानः, तेषां परमाणि अत्युत्तमानि, कर्णयो रसायनानि—जराशैथिल्यादिहरमौषधं रसायनमुच्यते—तद्वत्सुखकराणीति भावः, सापेक्षस्यापि कर्णशब्दस्य 'देवदत्तस्य गुरुकुलम्' इत्यादिवत् समासः। मनसः मलानां दोषाणां रागद्वेषादीनां प्रक्षालनाय विशोधनाय, एकानि अद्वितीयानि, सलिलानि जलानि, शौद्धोदनेः शुद्धोदनसुतस्य बुद्धदेवस्य, प्रवचनानि प्रकृष्टवचांसि उपदेशाः, चिरं जयन्ति सर्वोत्कर्षेण वर्तन्ते। अत्र जयन्तीतिलटा उत्कर्षस्य सिद्धत्वबोधनेन तादृशप्रवचनकर्तारं प्रति नतिराक्षिप्यते। एकस्यैव प्रवचनरूपस्योपमेयस्यौषधाद्यनेकोपमानयोगान्मालारूपकमिदम्। तत्र प्रथमतृतीयपादयोः औषधसलिलाभ्यां प्रवचनसादृश्यस्य कविसमयाप्रसिद्धतया, सलिलेऽमूर्तमनोमलानां रागादीनां क्षालकत्वानिष्पत्त्या च प्रवचन औषधसलिलारोपसिद्धये दुःखे गदारोपस्य, अमूर्तरागद्वेषादिषु पङ्कादिमूर्तारोपस्य च नियतमपेक्षितत्वेन परम्परितम्, वसन्ततिलकावृत्तम्।

**जयन्ति सन्तः सुकृतैकभाजनं-**
**परार्थसम्पादनसद्व्रतस्थिताः।**
**करस्थनीरोपमविश्वदर्शिनो ***
**जयन्ति वैदग्ध्यभुवः कवेर्गिरः ॥२॥**

**जयन्तीति**—सुकृतानां पुण्यानाम्, एकम् अनुपमम्, मुख्यं वा भाजनं पात्रम्, परेषां स्वेतरेषाम्, अर्थस्य प्रयोजनस्य, सम्पादनम् साधनमेव सद् व्रतं श्रेष्ठनियमः, तत्र स्थिता आरूढाः, सन्तः साधुपुरुषाः, जयन्ति। किं च करस्थं करतलगतं नीरं जलम्, उपमा उपमानं यस्य तादृशं विश्वं यः पश्यति, तथाभूतस्य समग्रं संसारं करतलजलवत् प्रत्यक्षं पश्यतः, कवेः क्रान्तदर्शिनः काव्यकर्तुः, वैदग्ध्यभुवः—विदग्धस्य लोकोत्तरवर्णनारूपं कर्म वैदग्ध्यम्, तद्भुवस्तदाश्रयाः, वाग्विशेषणम्। अथवा कवेरेवेदं विशेषणम्, विदग्धस्य कवेरित्यर्थः, गिरः वाचः, जयन्ति। एवं भूताः सन्तो विदग्धवाचः

---

* क्वचित्तु दर्शना इति पाठः—सोऽपि वर्णनानैपुण्येन करस्थनीरोपमो विश्वो दर्शनः—दर्शनाविषयो यत्र इत्येवं व्याख्यातव्यः—राज्ञा भुज्यन्त इति राजभोजनाः शालय इतिवद् दर्शना इत्यत्र कर्मणि ल्युट्।

कवयश्च नमस्करणीया इति पूर्ववन्नत्याक्षेपः। प्रस्तुतानां सतां कविवचसां च जयरूपसमानधर्मप्रतिपादनात् तुल्ययोगितालङ्कारः। अत्र केचित्—करस्थेत्यादिना-करस्थनीरविश्वयोः साक्षाद्दर्शनविषयतैव साधर्म्यं कवेर्विवक्षितम्, तस्य चोभयत्र उपमान उपमेये च प्रतीत्या भवितव्यम्, परमत्रोपपदसमासेन तद् विश्वस्मिन्नेवोपमेये प्रतीयते, न पुनरुपमाने नीरेऽपि, अतोऽत्रालङ्कारदोषः प्रतिभाति। 'करस्थवारीव जगद् विपश्यतो' इति पाठे तु न कश्चिद् दोषः, उपमानोपमेययोरुभयोरपि दर्शनक्रियायां कर्मत्वेनान्वयात् इत्याहुः। वृत्तं पूर्ववत्।

सतः संस्तुत्य दुर्जनं निन्दति—

**आक्रान्तेव महोपलेन मुनिना शप्तेव दुर्वाससा**
**सातत्यं बत मुद्रितेव जतुना नीतेव मूर्च्छां विषैः।**
**बद्धेवातनुरज्जुभिः परगुणान् वक्तुं न शक्ताऽसती-**
**जिह्वा लोहशलाकया खलमुखे विद्धेव संलक्ष्यते॥ ३॥**

**आक्रान्तेवेति**—परेषां गुणान् प्रतिभाप्राखर्यादीन् दयादाक्षिण्यादीन् वा, वक्तुं वाचा उद्घाटयितुम्, न शक्ता असमर्था, अत एव असती, खलमुखे जिह्वा, महोपलेन वृहत्या पाषाणशिलया, आक्रान्तेव निष्पीडितेव, दुर्वाससा तन्नामकेन मुनिना, शप्तेव दत्तशापेव, बत इति खेदे, जतुना लाक्षया, सततमेव सातत्यम्, स्वार्थे ष्यञ्, निरन्तरमित्यर्थः, मुद्रितेव निरुद्धेव, विषैः गरलैः, मूर्च्छां निश्चेष्टताम्, नीतेव प्रापितेव, अतनुभिः अकृशाभिः दृढाभिः, रज्जुभिः, बद्धेव नियन्त्रितेव, लोहशलाकया लोहकीलेन, विद्धेव कीलितेव, संलक्ष्यते प्रतीयते। मालोत्प्रेक्षालंकृतिः, शार्दूलविक्रीडितं वृत्तम्।

**इहानेके सत्यं सततमुपकारिण्युपकृति-**
**कृतज्ञाः कुर्वन्तो जगति निवसन्त्येव सुधियः।**
**कियन्तस्ते सन्तः सुकृतपरिपाकप्रणयिनो-**
**विना स्वार्थं येषां भवति परकृत्यव्यसनिता॥ ४॥**

**इहेति**—इह जगति, कृतज्ञाः अविस्मृतपरकृतोपकाराः, अत एव उपकारिणि स्वहितसम्पादयितरि जने, सततम् निरन्तरम्, उपकृतिम् प्रत्युपकारं कुर्वन्तः, अनेके, सुधियः सन्मतयः साधुपुरुषाः, निवसन्त्येव इति सत्यम्, एवकारोऽत्यन्ता-

योगव्यवच्छेदे । उपकर्तुः प्रत्युपकर्तृणामत्यन्तायोगो नास्तीतिभावः । परन्तु सुकृतस्य पुण्यस्य, परिपाकः परिणामः, तत्प्रणयिनः तदर्थिनः, ते सन्तः सत्पुरुषाः, कियन्तः ? अल्पीयांस एवेति भावः, येषां स्वार्थं स्वप्रयोजनं विना, परकृत्ये परकार्य साधने, व्यसनिता निरतिशयानुरागः, अस्तीति शेषः । शिखरिणी वृत्तम् ।

**एषोऽञ्जलिः सममसज्जनसज्जनौ तौ**
**वन्दे नितान्तकुटिलप्रगुणस्वभावौ ।**
**एकं भियाभिनवसंहितवैरिभावं-**
**प्रीत्या परं परमनिर्वृतिपात्रभूतम् ॥ ५ ॥**

**एष इति**—एषः, अञ्जलिः[1] पाणिसंपुटः, प्रणामायास्तीति शेषः, नितान्तम्, कुटिलः दुष्टः, प्रगुणः—प्रकृष्टा गुणाः क्षान्तिशालीनतादयो यत्र तथाभूतश्च स्वभावः, ययोस्तादृशौ, तौ लोकप्रसिद्धौ असज्जनसज्जनौ, समं युगपदेव, वन्दे प्रणमामि। तयोर्मध्ये, अभिनवः नूतनः, संहितः कारणं विनैव आश्रितः, वैरिभावः शत्रुता, येन तादृशम्, एकम्, असज्जनम्, भिया मिथ्यापवादभीत्या, परमा उत्कृष्टा या निर्वृतिः शान्तिः, तस्याः पात्रभूतम् आश्रयम्, परं सज्जनं तु प्रीत्या प्रेम्णा, वन्दे इत्यनुषञ्जनीयम् । कुटिलप्रगुणस्वभावयोर्यथासंख्यमसज्जनसज्जनाभ्यामन्वयाद् यथासंख्यमलङ्कारः । हिताहितयोस्तुल्यवृत्या तुल्ययोगिता, हेतुना समर्थनात् काव्यलिङ्गं च । वसन्ततिलका वृत्तम् । षष्ठे सप्तमेप्येतदेव ।

**किं मेऽथवा हतखलप्रणताविह स्यात्**
**स स्वीकरोति सुजनो यदि मां गुणज्ञः ।**
**चन्द्रेण चारुचरितेन विकाशितं सत्[2]**
**संकोचितं भवति किं कुमुदं तमोभिः ॥ ६ ॥**

**किमिति**—अथवेति पक्षान्तरे, इह ग्रन्थारम्भे, हतानां नीचप्रकृतीनाम्, खलानां दुर्जनानाम्, प्रणतौ प्रणामकरणे, मे मम, किं स्यात् किं फलं सिध्येत्, किमपिनेत्यर्थः । यदि स लोकप्रसिद्धः, गुणज्ञः गुणान् काव्यकलाप्रावीण्यादीन्,

---

१—अञ्जलिस्तु पुमान् हस्तसंपुटे कुडवेपि च, इति मेदिनी ।

२—क्वचित् 'सत' इति पाठः ।

जानातीति तथाभूतः, सुजनः, मां स्वीकरोति मत्काव्यं सशिरःकम्पमभिनन्दतीत्यर्थः । कुमुदम् कैरवपुष्पम्, चारु परप्रकाशनादिना मनोहरम्, चरितं वृत्तं यस्य, तादृशेन चन्द्रेण विकासितं प्रफुल्लतां प्रापितं सत्, तमोभिः अन्धकारैः, संकोचितम् मुद्रितं, भवति किम् ? नेति भावः । गुणज्ञ इति विशेषणं स्वीकारे साभिप्रायमिति परिकरः, धर्मधर्मिणां सर्वेषां बिम्बप्रतिबिम्बभावाद् दृष्टान्तश्च ।

**प्रीत्यै सतां तदनुभावगतावसादः**
**संत्यज्य गूढरचनां प्रतिभानुरूपम् ।**
**क्षिप्रावबोधकरणक्षममीक्षितार्थं**
**वक्ष्ये विदग्धमुखमण्डनमप्रपञ्चम् ॥ ७ ॥**

**प्रीत्यै इति,** तेषां सतामेव, अनुभावेन गतः अवसादः खेदः यस्य तादृशः, अहम्, गूढाम् अविस्पष्टार्थां रचनां पदसंनिवेशरूपां संत्यज्य परिहृत्य, प्रतिभाया नवनवोन्मेषशालिन्याः स्वप्रज्ञायाः, अनुरूपं योग्यम्, क्रियाया विदग्धमुखमण्डनस्य वा विशेषणम् । क्षिप्रम् अतिशीघ्रम्, अवबोधकरणे ज्ञानजनने, क्षमं समर्थम्, ईक्षितः प्रत्यक्षं दृष्टः, अर्थः—सभारञ्जनवादिमुखमुद्रणादि प्रयोजनं यस्य तथोक्तम्, अप्रपञ्चम्—प्रपञ्चो विस्तरः, तच्छून्यम्, विदग्धानां सभाचतुराणां मुखानि, तेषां मण्डनम् अलङ्कारभूतं विदग्धमुखमण्डनाख्यं ग्रन्थम्, वक्ष्ये ग्रथिष्यामीति यावत् ।

**यद्यस्ति सभामध्ये स्थातुं वक्तुं मनस्तदा सुधियः ।**
**ताम्बूलमिव गृहीत्वा विदग्धमुखमण्डनं विशत ॥ ८ ॥**

**यद्यस्तीति**—हे सुधियः हे विद्वांसः, यदि सभाया विदुषां परिषदः, मध्ये, स्थातुं वक्तुं भाषितुं च मनः अस्ति, 'तुं काममनसोरपि' इत्यस्य 'वक्तुमना' इत्यादौ समास एव प्रवृत्तेर्मलोपो न । तदा ताम्बूलमिव विदग्धमुखमण्डनम् इमं ग्रन्थम्, गृहीत्वा अभ्यस्य ( ताम्बूलपक्षे चर्वित्वा ) विशत सभायां प्रवेशं कुरुत । उपमा । आर्यावृत्तम् ।

## अथ जात्युद्देशः ।

**प्राहुर्व्यस्तं समस्तं च द्विर्व्यस्तं द्विःसमस्तकम् ।**
**तथा व्यस्तसमस्तं च द्विर्व्यस्तकसमस्तकम् ॥ ६ ॥**

सद्विःसमस्तकव्यस्तमेकालापं प्रभिन्नकम् ।
भेद्यभेदकमोजस्वि सालङ्कारं सकौतुकम् ॥ १० ॥
प्रश्नोत्तरसमं पृष्टप्रश्नं भग्नोत्तरं तथा ।
आदिमध्योत्तराख्ये द्वे अन्त्योत्तरमतः परम् ॥ ११ ॥
कथितापन्हुतिं चैव विषमं वृत्तनामकम् ।
नामाख्यातं च तार्क्यं च सौत्रं शाब्दीयशास्त्रजे ॥ १२ ॥
वर्णवाक्योत्तरे तद्वच्छ्लोकोत्तरमतः परम् ।
खण्डपादोत्तरे चक्रं पद्मं काकपदं तथा ॥ १३ ॥
गोमूत्रीं सर्वतोभद्रं गतप्रत्यागतं बहु ।
वर्धमानाक्षरं तद्वद्धीयमानाक्षरं तथा ॥ १४ ॥
शृङ्खलां नागपाशं च चित्रं संशुद्धमेव च ।
प्रहेलिकां तथा हृद्यं कालसारादि वर्णितम् ॥ १५ ॥
अजमारादिकं गूढं पदपादार्थगूढकम् ।
स्तुतिनिन्दां तथा व्यर्थं सहापन्हुति विन्दुमत् ॥ १६ ॥
क्रियाकारकसम्बन्धगुप्तान्यामन्त्रितस्य च
गुप्तं तथा समासस्य लिङ्गस्य वचनस्य च ॥ १७ ॥
मात्राविन्दुविसर्गाणां च्युतकान्यक्षरस्य च ।
स्थानव्यञ्जनयोश्चापि च्युतदत्ताक्षरं तथा ॥ १८ ॥

इति जात्युद्देशः ।

एतद्ग्रन्थप्रतिपाद्यबुबोधयिषयोद्देशग्रन्थमारभते **प्राहुरिति** । नाममात्रेण प्रतिपाद्यवस्तूनां संकीर्तनम् उद्देश उच्यते । व्यस्तादिजातीः प्राहुः सभाविदग्धा इति भावः । व्यस्तमित्यादिपदानि सर्वाणि द्वितीयान्तानि प्राहुरित्यस्य कर्माणि । दशमकारिकायां **सद्विरिति**–द्विःसमस्तकव्यस्तेन सह वर्तते इति सद्विःसमस्तकव्यस्तम्, बहुव्रीहौ 'वोपसर्जनस्य' इति सहस्य सादेशः । छन्दःपूर्त्यर्थमेवैष समासः । संज्ञा तु 'द्विःसमस्तकव्यस्तम्' इत्येव । एकादशकारिकायाम् **आदिमध्योत्तरेति**–आदिमध्ययोरुत्तरे ययोस्ते आदिमध्योत्तरे, 'द्वद्वान्ते द्वन्द्वादौ वा श्रूयमाणं पदं प्रत्येकमभिसम्बध्यते' इति वचनेन आद्युत्तरं मध्योत्तरं चेत्यर्थः । एवं त्रयोदश्यां कारिकायां वर्णोत्तरं

वाक्योत्तरं खण्डोत्तरं पादोत्तरमिति भेदा ऊह्याः। चतुर्दश्यां **बहु**—इति बहुविधमित्यर्थः। पञ्चदश्यां **कलसारादीति** हृद्यविशेषणम्, कालहृद्यम्,सारहृद्यमित्यर्थः, आदिपदेन रागहृद्यद्वेषहृद्यादयो भेदा विवक्षिताः, ते च लक्षणोदाहरणप्रसङ्गे स्फुटीभविष्यन्ति। षोडश्याम्—**अजेत्यादि**—अजगूढम्, मारगूढम्, पदगूढम्, पादगूढम्, अर्थ-( अभिप्राय ) गूढम्, इत्यर्थः। सहापन्हुति—इत्यत्रापि पूरणार्थमेव सहसमासः, संज्ञात्वपन्हुतिरित्येव। सप्तदश्यां **गुप्तमिति** काकाक्षिन्यायेन पूर्वेण ( आमन्त्रितस्येत्यनेन ) परेण ( समासस्येत्यादिना ) चान्वेति—तथा च—आमन्त्रितगुप्तम्, समासगुप्तमित्यादि फलति। अष्टादश्यां **च्युतकानीत्यस्य** मात्रादिव्यञ्जनान्तैरन्वयः, तदेवं मात्राच्युतकम्, विन्दुच्युतकम्, विसर्गच्युतकम्, अक्षरच्युतकम्, स्थानच्युतकम्, व्यञ्जनच्युतकम्, इति भेदाः फलिताः, अक्षरच्युतकमित्यत्र सस्वरं व्यञ्जनमक्षरपदेन गृह्यते, व्यञ्जनच्युतकमित्यत्र तु स्वरहीनं व्यञ्जनमात्रम्। अथेदानीं यथाक्रमं लक्षणान्युदाहरणानि च वक्तुं प्रक्रमते।

तत्र पूर्वं व्यस्तसमस्तयोर्लक्षणं यथा—

**पृष्टं पदविभागेन केवलेनैव यद् भवेत्।**
**विदुर्व्यस्तं, समस्तं यत् समुदायेन पृच्छ्यते ॥ १६ ॥**

**पृष्टमिति**—अत्र केवलेनैवेति पदं पदविभागसमुदाययोरुभयोरपि विशेषणम्। यदुत्तरं केवलेनैव समुदायरहितेन पदविभागेन—विभक्तपदैः, व्यासेनेति यावत्, पृष्टम्, तद् व्यस्तं विदुर्विदग्धा इति शेषः। विभक्तपदात्मकं यत्रोत्तरं तद्व्यस्तं पृष्टमिति भावः। यच्च केवलेनैव पदविभागरहितेन समुदायेन समासेनेतियावत् पृच्छ्यते, तत्समस्तम्। समस्तपदात्मकं यत्रोत्तरं तत् समस्तं पृष्टमिति भावः।

तत्र व्यस्तोदाहरणं यथा—

**पूजायां किं पदं प्रोक्तमस्तनं को बिभर्त्युरः।**
**क आयुधतया ख्यातः प्रलम्बासुरविद्विषः ॥ २० ॥**

**पूजायामिति,** पूजेत्यादि स्पष्टार्थम्। अस्तनम्—स्तनौ पयोधरौ, तद्रहितम् उरः को बिभर्तीत्यन्वयः। प्रलम्बासुरस्य, विद्विषः शत्रोर्बलभद्रस्य, आयुधतया शस्त्रतया, कः ख्यातः प्रसिद्धः ?

अत्रोत्तरम् सुनासीर नम पूजार्थकं पदं 'नु' इति। अस्तनोरस्कः

'ना' पुरुष इति यावत्। बलभद्रस्यायुधतया ख्यातः 'सीरः' हल इत्यर्थः। तदेवं विभक्तपदात्मकोत्तरत्वाद् व्यस्तपृष्टमिदम्।

**को दुराढ्यस्य मोहाय, का प्रियाऽसुर*विद्विषः।**
**पदं प्रश्नवितर्के किं को दन्तच्छदभूषणम्॥ २१॥**

क इति, दुराढ्यस्य दुष्टधनिकस्येत्यर्थः, मोहाय तादर्थ्ये चतुर्थी। असुरविद्विषः विष्णोः। प्रश्नवितर्के—प्रश्नश्च वितर्कश्चानयोः समाहारः प्रश्नवितर्कम्, तत्र। प्रश्नद्योतकं वितर्कद्योतकं चेत्यर्थः। दन्ताश्छाद्यन्तेऽनेनेति दन्तच्छद ओष्ठस्तस्य भूषणम् अलङ्करणम्। इतरत् स्पष्टम्। अत्र क इति पुंस्त्वमुत्तरगतपुंस्त्वापेक्षया, एवमन्यत्रापि यत्र लिङ्गासङ्गतिस्तत्रैवमेव समाधेयम्। किं वस्तु, कः पदार्थः, का व्यक्तिरित्येवं वस्त्वादीनि पदानि वा तत्र तत्र यथायथमध्याहर्तव्यानीति केचित्।

अत्रोत्तरं **'रा मा नु रागः'**। तत्र दुराढ्यस्य मोहाय 'राः' धनमित्यर्थः। विष्णुप्रिया 'मा' लक्ष्मीरित्यर्थः। प्रश्नवितर्कयोर्द्योतकम् 'नु' इति। दन्तच्छदभूषणं 'रागः'। उत्तराणां विभक्तपदात्मकत्वादिदमपि व्यस्तं पृष्टम्। राकारोत्तरविसर्गस्य रुत्वयत्वक्रमेण 'हलि सर्वेषाम्' इति लोपः।

इति व्यस्तजातिः।

अथ समस्तमुदाहरति—

**अपि सेविता द्विजिह्वैः कदापि के यान्ति न विकारम्।**
**विच्छिद्यमानतनवः स्वगुणैरधिकं विराजन्ते॥ २२॥**

**अपीति**—द्वे जिह्वे येषां तैर्द्विजिह्वैः सर्पैरपि, सेविता आश्रिताः, के कदापि विकारं स्वभावविपर्यं न यान्ति न प्राप्नुवन्ति? किं च विच्छिद्यमाना द्विधा क्रियमाणाः घृष्यमाणा वा तनवः शरीराणि येषां तथाभूता अपि, स्वगुणैः अधिकम्—अच्छिन्नशरीरत्वतोऽप्यधिकं विराजन्ते? आर्यावृत्तम्।

अत्रोत्तरं **'मलयतरवः'** चन्दनवृक्षाः। यत इम एव सर्पाश्रिता अपि न तद्गुणं प्राणहरणविषदाहादिकं स्वीकुर्वते। किन्तु सौरभादिस्वस्वभाव एव तिष्ठन्ति, चेच्छिद्यमानाश्चाधिकाधिकं स्वगुणं सौरभं वमन्ति। इदं चोत्तरं पदविभागाभावात् समस्तपदात्मकम्।

---

* सुर इति क्वचित्पाठः।

अस्यैव द्वितीयमुदाहरणं यथा—

**अनिभृतकोकिलनिःस्वनमुखरितसहकारकाननः पुंसाम् ।**
**को भवति हृदयहारी मधुकरझङ्कारिकङ्केलिः ॥ २३ ॥**

**अनिभृतेति**—अनिभृतानां चञ्चलानां कोकिलानां निःस्वनेन शब्देन मुखरितं शब्दायितं सहकाराणाम् आम्राणां काननं वनं यत्र तादृशः, पुंसां मानवानां हृदयहारी चित्तप्रसादनः, मधुकराणां भ्रमराणां झङ्कारो झंझंशब्दः, स एषा-मस्तीति तादृशाः [१]कङ्केलयः अशोकवृक्षाः, यत्र तादृशः को भवति ? इति प्रश्नः । पूर्ववदार्यां वृत्तम् । अत्रोत्तरं '**मधुसमयः**' वसन्तकाल इत्यर्थः । इदमपि पदविभागाभावेन समस्तपदात्मकम् ।

इति समस्तजातिः ।

अथ द्विर्व्यस्तं द्विःसमस्तं च लक्षयति ।

**व्यस्तं समस्तमथवा समासपदभङ्गतः ।**
**द्विःपृष्टं यत्तदेव स्याद् द्विर्व्यस्तं द्विःसमस्तकम् ॥२४॥**

**व्यस्तमिति**—यदुत्तरं द्विः व्यस्तं द्वेधा व्यासेन पृथक् पदविभगेन, अथवा द्विःसमस्तं द्वेधा समासेन समुदायरूपेण समस्तपदात्मकतया, एतदेव स्फुटं विवरीतुं क्रमवैपरीत्येनाह—समासपदभङ्गत इति,समासेन पदभङ्गेन चेत्यर्थः, पृष्टं तदेव द्विर्व्यस्तं द्विःसमस्तं च क्रमश उच्यते । ताराचन्द्रस्तु समासस्य पदानां भङ्गो-भेदः, तस्मात् समासपदभङ्गतः, यद् व्यस्तं प्रागुक्तव्यस्तप्रश्नरीत्या द्विःपृष्टं द्विवारं पृष्टं तद् द्विर्व्यस्तसंज्ञं स्यात् अथवा यत् समस्तं प्रागुक्तसमस्तप्रश्नरीत्या समासपदभङ्गतो द्विवारं पृष्टं तद् द्विःसमस्तम्, इति व्याख्यत् ।

तत्र द्विर्व्यस्तस्योदाहरणं यथा—

**वर्षासु का भवति निर्मधु कीदृगब्जं-**
**शेषं बिभर्ति वसुधासहितं क एकः ।**
**आमन्त्रयस्व धरणीधरराजपुत्रीं-**

---

१—कङ्केलिर्वञ्जुलोऽशोकः इति हलायुधः ।

**कोऽन्त्रास्थिभस्मनिचिताङ्गजनाश्रयः स्यात् ॥२५॥**

**वर्षास्विति**—वर्षासु वर्षर्तौ का भवति ? निर्गतं मधु यस्मात्तादृगब्जं कमलं कीदृग् भवतीति शेषः । कः एक एकाकी असहाय इत्यर्थः, वसुधया पृथिव्या संहितं शेषं शेषनागं बिभर्ति ? धरणीधराणां पर्वतानां राज्ञो हिमालयस्य पुत्रीं पार्वतीम्, आमन्त्रयस्व सम्बोधय—पार्वतीवाचकं पदं सम्बोधनविभक्त्यन्तं कृत्वा प्रयुङ्क्ष्वेति भावः । अन्त्रैः अस्थिभिर्भस्मभिश्च निचितानि व्याप्तानि अङ्गानि येषां तेषां जनानाम् आश्रयः, कः ?

अत्रोत्तरम् '**कालिकापालिकमठः**' । वर्षासु 'कालिका' श्यामता, श्यामवर्णा मेघमाला[2] वा भवति । निर्मधु कमलम् 'अपालि' अपगता अलयो भ्रमरा यस्मात्तादृशम्, भ्रमरहीनं भवति । वसुधासहितं शेषं 'कमठः[3]' कच्छपो धारयतीति पौराणिकाः । धरणीधरराजपुत्र्या आमन्त्रणं 'कालि' इति, सम्बोधने अम्बार्थेति ह्रस्वः । अन्त्रास्थ्यादिधारकजनानामाश्रयः '**कापालिकमठः**' कापालिकानां मठः । कापालिका हि स्वसम्प्रदायानुसारेण अन्त्रादीनि धारयन्ति । अत्र हि कालिका, अपालि, कमठः, इत्येकः पदविभागः । कालि, कापालिकमठः, इत्यपरः, अतो द्वेधा पदविभागेन द्विर्व्यस्तं पृष्टमिदम् ।

अस्यैव द्वितीयं यथा—

**कीदृशं बत मरुस्थलं मतं-**
**द्वारि कुत्र सति भूषणं भवेत् ।**
**ब्रूहि कान्त ! सुभटः सकार्मुकः**
**कीदृशो भवति कुत्र विद्विषाम् ॥ २६ ॥**

**कीदृशमिति**—हे कान्त ! मरुस्थलं निर्जलप्रदेशः, कीदृशं मतम् ! द्वारि देशे, कुत्र सति कस्मिन् वस्तुनि विद्यमाने, भूषणं भवेत् ? सकार्मुकः धनुर्युक्तः, सुभटः श्रेष्ठयोद्धा, विद्विषां शत्रूणाम्, कीदृशः कुत्र भवति ?

---

१—'वास्थि' इति क्वचित् पाठः ।

२—'मेघजालेऽपि कलिका' इत्यमरः ।

३—पानीये मठः स्थानं यस्य स इति विग्रहार्थः ।

अत्रोत्तरम् '**अवारितोरणे**' तथा हि—मरुस्थलम् 'अवारि' न वारि यस्मिंस्तादृशं निर्जलमित्यर्थः । द्वारि 'तोरणे' आम्रपल्लवादिनिर्मित-मालिकायां सति भूषणं भवेत् । सकार्मुकः सुभटो विद्विषाम् 'अवारितः' अनवरुद्धः, भवति, कुत्र भवति 'रणे' । विद्विषामित्यत्र सम्बन्धसामान्ये षष्ठी, विद्विड्भिरित्यर्थः । अत्रापि अवारि, तोरणे, इत्येकः, अवारितः, रणे, इत्यपरः पदविभागः ।

द्विःसमस्तस्योदाहरणं यथा—

**पत्निश्रेष्ठसखीवभ्रूसुरा वाच्याः कथं वद ।**
**ज्येष्ठे मासि गताः शोषं कीदृश्योऽल्पजला भुवः ॥२७॥**

**पत्नीति**—पत्नी, श्रेष्ठः, सहचरी, बभ्रूः [1] नकुलस्त्री, सुरा मदिरा, एते पदार्थाः कथं वाच्याः एतेषामभिधायकाः के शब्दा इति वद । ज्येष्ठे मासि शोषं गताः शुष्का अत एव अल्पं जलं यासु ता भुवः भूप्रदेशाः, कीदृश्यः ?

अत्रोत्तरम्—**विवरालीनकुलीराः** । विश्व, वरश्च, आली च, नकुली च, इरा [2] च, एतेषां द्वन्द्वः । अत्र विप्रभृतयः पत्न्यादीनामभिधायकाः । द्वितीयप्रश्नोत्तरमपीदमेव—विवरेषु च्छिद्रेषु, आ समन्ततः, लीनाः प्रविष्टाः, कुलीराः [3] कर्कटका जीवविशेषाः, यासु तथाभूताः । द्विवारं समासेन पृच्छ्यमानत्वादिदं द्विःसमस्तोदाहरणम् ।

अस्यैवापरं यथा—

**विश्वम्भराप्रलम्बघ्नव्रीहिमानुषसंयतः ।**
**कथं वाच्या भवन्त्येता दिनान्ते विकसन्ति काः ॥२८॥**

**विश्वम्भरेति**—विश्वम्भरा पृथ्वी, प्रलंम्बं हतवान् प्रलम्बघ्नो बलभद्रः, व्रीहिर्धान्यविशेषः, मानुषः, संयत् संग्रामः, एताः कथं वाच्याः कैः पदैरभिधेयाः ? द्वद्वान्तपठितसंयच्छब्दस्य स्त्रीत्वात् 'परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः' इति समस्तस्यापि

१—विपुले नकुले विष्णौ बभ्रूः स्यात् पिङ्गले त्रिषु—इत्यमरः ।

२—इरा भूवाक्सुराप्सु स्यात्—इत्यमरः ।

३—स्यात् कुलीरः कर्कटक इत्यमरः ।

४—संयत्समित्याजिसमिद्युधः—इति सुबन्तभाण्डारः।

स्त्रीत्वम् । दिनान्ते सूर्यास्तमये का विकसन्ति ?

अत्रोत्तरम्—**कुवलयवनराजयः** । कुः पृथ्वी, बलो बलभद्रः, यद्यपि बलशब्द ओष्ठ्यादिः, तथापि काव्यमार्गे बवयोरैक्यम्, यवो व्रीहि-विशेषः, नरो मानुषः, आजिः संग्रामः। अत्रापि कादिपदानां द्वन्द्वः, द्वितीयोत्तरम्-कुवलयवनानां कुमुदसमूहानां राजयः पङ्क्तयः, दिनान्ते चन्द्रोदये सति ता एव विकसन्ति ।

इति द्विःसमस्तजातिः ।

व्यस्तसमस्तं लक्षयति—

**पृष्टं पदविभागेन समुदायेन यद् भवेत् ।**
**विदुर्व्यस्तसमस्तं तदुभयार्थप्रदर्शकम् ॥ २९ ॥**

**पृष्टमिति**—यदुत्तरं पदविभागेन, समुदायेन समासेन च पृष्टं भवेत्, तद् उभयोः व्यस्तसमस्तप्रश्नयोः,अर्थस्य प्रदर्शकं बोधकं व्यस्तसमस्तं व्यस्तं च तत् समस्तं च, विशेषणयोः कर्मधारयः, विदुर्विद्वांस इति शेषः ।

अथोदाहरति—

**का प्रियेण रहिताङ्गना मुनेर्धाम्नि केन तनयेन नन्दिता ।**
**कीदृशेन पुरुषेण पक्षिणां बन्धनं समभिलष्यते सदा ॥ ३० ॥**

**केति**—मुनेर्धाम्नि गृहे आश्रम इति यावत्, प्रियेण रहिता वियुक्ता अङ्गना का ? सैव च केन तनयेन नन्दिता संतोषिता ? उत्तरार्धं स्पष्टम् ।

अत्रोत्तरम्—**शकुन्तलाभरतेन** । कण्वमुनेराश्रमे स्वप्रियेण दुष्यन्तेन वियुक्ता अङ्गना 'शकुन्तला' सैव च स्वतनयेन 'भरतेन' नन्दिता । इदं पद-विभागेनोत्तरम् । समासेन यथा—शकुन्तानां पक्षिणां लाभे प्राप्तौ रतेन आसक्तेन व्याधेन सदा पक्षिणां बन्धनमिष्यते ।

अस्यैव द्वितीयमुदाहरणं यथा—

**कीदृशं हृदयहारि कूजितं कः सखा यशसि भूपतेर्मतः ।**
**कस्तवास्ति विपिने भयाकुलः कीदृशश्च न भवेन्निशाकरः ॥३१॥**

**कीदृशमिति**—हृदयं हरतीति हृदयहारि मनोहरं कूजितं शब्दः कीदृशम् ? यशसि यशोविषये यशःप्रसारणे इत्यर्थः, भूपतेः कः सखा सहायः,

मत इष्टः ? तव कः विपिने भयेन आकुलस्त्रस्तः अस्ति ? निशाकरः कीदृशो न भवेत् ?

अस्योत्तरम्—**कलङ्कविरहितः ।** 'कलम्' कूजितं हृदयहारि । यशः-प्रसारणे भूपतिसखः 'कविः' । तव 'अहितः' शत्रुर्विपिने भयाकुलः । 'कलङ्केन विरहितः' निशाकरो न भवेत् ।

इति व्यस्तसमस्तजातिः ।

द्विर्व्यस्तसमस्तकं लक्षयति—

**द्विर्व्यस्तमेव यत्पृष्टं समुदायेन यद् भवेत् ।**
**त्रिधा भिन्नं तदेवोक्तं द्विर्व्यस्तकसमस्तकम् ॥ ३२ ॥**

**द्विरिति**—यदुत्तरं द्विर्द्विवारं व्यस्तमेव व्यस्तीकृत्य पदविभागेनैव पृष्टम्, पश्चाच्च सकृत् समुदायेन समासेन पृष्टम्, त्रिधा भिन्नं द्विर्व्यस्ततया, सकृत् समस्ततया त्रिरूपतामापन्नं तदेवोत्तरं द्विर्व्यस्तकसमस्तकमुच्यते । "द्विवारं व्यस्तीकृत्य पश्चात् समुदायेन पृच्छ्यते तद् द्विर्व्यस्तकसमस्तकपृष्टम्" इति संक्षिप्तार्थः ।

उदाहरणं यथा—

**कौ शङ्करस्य वलयावपयोधरः कः**
**कीदृक् परस्य नियतं वशमेति भूपः ॥**
**संबोधयोरगपतिं विजयी च कीदृग्**
**दुर्योधनो न हि भवेद् वद कीदृशश्च ॥ ३३ ॥**

**काविति**—शङ्करस्य वलयौ कङ्कणौ कौ ? अपयोधरः कुचरहितः कः ? कीदृग् भूपो नियतम् अवश्यं परस्य वशमेति परतन्त्रो भवति ? उरगपतिं शेषनागं संबोधय संबुद्धिविभक्त्यन्तं पदमुच्चार्य आह्वय । कीदृग् राजा विजयी भवति ? दुर्योधनः कीदृशो न भवेत् ?

अस्योत्तरम्—**अहीनाक्षतनयः ।**

'अही' सर्पौ शङ्करवलयौ, 'ना' मनुष्यः कुचरहितः, क्षतो विनाशितो नयो येन सः 'क्षतनयः' नीतिरहितः परवशमेति । इति प्रथमः पदविभागः । द्वितीयो यथा—अहीनानाम् उरगाणाम् इनः पतिः स्वामीतियावत्, तद्

सम्बोधनम् हे 'अहीन' इति, न क्षतः नयः यस्य तादृशः 'अक्षतनयः' नीतिमान् नृपतिर्विजयी भवति। समुदायेन यथा—न हीने अक्षिणी यस्य सः अहीनाक्षः अनन्धः, तस्य तनयः 'अहीनाक्षतनयः' अनन्धपुत्रः, तादृशश्च दुर्योधनो न भवति, तस्य अन्धपुत्रत्वात्।

अथापरमस्यैवोदाहरणं यथा—

**को मोहाय दुरीश्वरस्य विदितः ? संबोधनीयो गुरुः**
**को धात्र्यां विरलः कलौ, नवघनः किंवन्न कीदृग् द्विजः।**
**किं रेखावचनं भवेदतिशयं दुःखाय कीदृक् खलः**
**को विघ्नाधिपतिर्मनोभवसमो मूर्त्या पुमान् कीदृशः ॥ ३४ ॥**

**क इति**—दुरीश्वरस्य दुष्टधनिकस्य मोहाय कः पदार्थः? गुरुः वृहस्पतिः संबोधनीयः संबोधनविभक्त्या आकारणीयः, कलौ कलियुगे, धात्र्यां पृथिव्याम्, विरलः अल्पसंख्यः, कः? नवघनः नवीनमेघः किंवत् कीदृशो भवति? द्विजः कीदृङ् न भवति? रेखावचनं रेखावाचकं पदं किम्? कीदृक् खलः अतिशयम् अधिकं दुःखाय भवेत्? विघ्नानाम् अधिपतिः कः? मूर्त्या आकृत्या मनोभवसमः कामदेवतुल्यः, कीदृशः पुमान्?

अस्योत्तरम्—**राजीवसन्निभवदनः** । तथाहि 'राः' धनम् दुरीश्वरस्य मोहजनकः। हे 'जीव[1]' इति गुरुवाचक ( जीव ) शब्दस्य सम्बुद्धिविभक्त्यन्तं रूपम्। 'सन्' सज्जनः कलौ विरलः। नवीनमेघः 'इभवत्' श्यामतादिसादृश्येन हस्तिवत्। द्विजः 'अनः' न अः[2] वासुदेवो भजनीयो यस्य तादृशो न, अविष्णुभक्तो नेत्यर्थः। 'अ' इत्यस्य नञा समासे, नलोपे, 'तस्मान्नुडचि' इति नुडागमे सिद्धं रूपम्। इति प्रथमः पदविभागः। द्वितीयो यथा—रेखावाचकं पदं 'राजी[3]' इति। 'वसन्' समीपे निवसन् खलोऽधिकदुःखदो भवति। 'इभवदनः' गजाननो विघ्नाधिपतिरस्ति। समुदायेन यथा—राजीव-

---

१—वृहस्पतिः सुराचार्यो गीष्पतिर्धिषणो गुरुः, जीवः—इत्यमरः।
२—अकारो वासुदेवः स्याद् इत्येकाक्षरकोशः।
३—राजी रेखायां पङ्क्तौ च—इति हैमः।

सन्निभं कमलसदृशं वदनं मुखं यस्य सः 'राजीवसन्निभवदनः' पुरुषः कामदेवतुल्यः ।

इति द्विर्व्यस्तकसमस्तजातिः ।

द्विःसमस्तव्यस्तं लक्षयति ।

**द्विःसमस्तं यदापृष्टं व्यस्तकेन पुनर्भवेत् ।**
**तद् द्विःसमस्तकव्यस्तं कथितं प्रश्नपण्डितैः ॥३५॥**

**द्विरिति**—यदुत्तरं पूर्वं द्विःसमस्तं द्विवारं समासेन समुदायरूपेण, पुनः व्यस्तकेन पदविभागेन आपृष्टं भवेत्, तत् प्रश्नपण्डितैः द्विःसमस्तकव्यस्तं कथितम् ।

तदुदाहरणं यथा—

**कीदृक्षः सकलजनो भवेत् सुराज्ञः ।**
**कः कालो विदित इहान्धकारहेतुः ॥**
**कः प्रेयान् कुमुदवनस्य, को निहन्ति ।**
**भ्रातृव्यं वद शिरसा, जितस्त्वया कः ॥३६॥**

**कीदृक्ष इति ।** * सुराज्ञः श्रेष्ठनृपतेः, सम्बन्धी सकलो जनः कीदृक्षः कीदृशः,भवेत् ? इह जगति, अन्धकारस्य हेतुः कः कालः,विदितः प्रसिद्धः ? कुमुदानां वनस्य, प्रेयान् प्रियतरः, कः ? शिरसा करणे तृतीया † भ्रातृव्यं स्वशत्रुम्, कः निहन्ति अवताडयति ? त्वया कः जितः पराभूतः ?

अस्योत्तरम्—**विधुरविरहितः** । तथाहि—सुनृपतेः सकलो जनः विधुरेण कष्टेन विरहितः । विधुश्च रविश्च विधुरवी, ताभ्यां रहितः कालः अन्धकारस्य हेतुः । इत्युत्तरद्वयं समासद्वयेन । पदविभागेनोत्तरं यथा—'विधुः' कुमुदवनस्य प्रेयान् । 'अविः' मेषः स्वशत्रुं शिरसा निहन्ति । 'अहितः' शत्रुस्त्वया जितः ।

---

* 'न पूजनात्' इति समासान्तनिषेधः ।

† भ्रातृशब्दात् 'व्यन्सपत्ने'

अस्यैव द्वितीयमुदाहरणं यथा—

संग्रामे स्फुरदसिना हतास्त्वया के ।
के दुःखं बत निरये नरस्य कुर्युः ॥
कस्मिन्नुद्भवति कदापि नैव लोम ।
ज्ञाताः के जगति महालघुत्वभाजः ॥३७॥

**संग्राम इति**—त्वया संग्रामे, स्फुरता दीप्यमानेन, असिना के हताः ? निरये नरके, नरस्य पापिनो मनुष्यस्य, के दुःखं कुर्युः उत्पादयेयुः ? कस्मिन् अवयवे लोम कदापि नैव उद्भवति ? जगति महालघुत्वभाजः अणुपरिमाणाः के ज्ञाताः प्रसिद्धाः ।

अत्रोत्तरम्–**नरकरेणवः** । प्रथमोत्तरे नरकरेणुशब्दयोर्द्वन्द्वः द्वितीये, नरक-शब्दस्य रेणुशब्देन तत्पुरुषः । नराः * करेणवो हस्तिनश्च, त्वया संग्रामे असिना हताः । नरकस्य रेणवोऽग्निरूपा धूलिकणाः निरये दुःखमुत्पादयेयुः । 'नरकरे' नरस्य हस्ततले लोम नोत्पद्यते । 'अणवः' परमाणवोऽणुपरिमाणाः ।

इति द्विःसमस्तकव्यस्तजातिः ।

अथ द्विःसमस्तकस्य प्रभेदमेकालापकमाह—

एकश्रुत्या वचो यत्र भिन्नार्थप्रतिपादकम् ।
प्रभेदं द्विःसमस्तस्य तमेकालापकं विदुः । ३८॥

**एकेति** । यत्र वच उत्तररूपं वचनम्, एकश्रुत्या समानानुपूर्व्या भिन्नार्थ-प्रतिपादकम् अर्थद्वयबोधकं भवति, तम् एकमेव सदर्थद्वयमालपतीति हेतोः एकालापकं नाम द्विःसमस्तस्य प्रभेदं विदुः ।

अस्योदाहरणं यथा—

कीदृशी निरयभूरनेकधा
सेव्यते परमपापकर्मभिः ।
प्रेतराक्षसपिशाचसेविता
कीदृशी च पितृकाननस्थली ॥ ३९ ॥

* करेणुर्गजयोषायां स्त्रियां पुंसि मतङ्गजे । इति मेदिनी ।

**कीदृशीति,** १—परमाणि पापकर्माणि येषां तैः पुरुषैः, कीदृशी निरयभूः नरकभूमिः, अनेकधा बहुभिः प्रकारैः, सेव्यते ? २—प्रेतैः राक्षसैः पिशाचैश्च सेविता, पितृकाननस्य श्मशानस्य, स्थली अकृत्रिमा भूमिः, जानपदेत्यादिना ङीष्, कीदृशी कथंविधा ?

अस्योत्तरम्—**नरकपालरचिता।** १—नरकं पालयतीति नरकपालो यमः, तेन रचिता नरकभूमिः पापिभिः सेव्यते। अथवा नरकपाला यमसेवकाः, तै-रचितेति योज्यम्। २—नराणां मृतपुरुषाणां कपालै रचिता उपस्कृता श्मशानभूमिः प्रेतादिभिः सेव्यते।

अस्यैव द्वितीयमुदाहरणं यथा—

**केसरद्रुमतलेषु संस्थितः कीदृशो भवति मत्तकुञ्जरः।**
**तत्त्वतः शिवमवेत्य लक्षणैरर्जुनः समिति कीदृशोऽभवत्॥४०॥**

**केसरेति,** १—केसरद्रुमाणां बकुलवृक्षाणां तलेषु अधःप्रदेशेषु संस्थितः मत्तकुञ्जरः मदस्रुतियुक्तो हस्ती कीदृशो भवति ? २—अर्जुनः समिति संग्रामे शिवं किरातरूपधारिणं महादेवं लक्षणैश्चिन्हैः तत्त्वतः याथातथ्येन अवेत्य ज्ञात्वा कीदृशोऽभवत् ?

अस्योत्तरम्—**दानवकुलभ्रमरहितः।** १—बकुलवृक्षाधःस्थितो मत्तो हस्ती दानेन स्वमदेन बकुलभ्रमराणां बकुलवृक्षस्थितानां भ्रमराणां हितः सुखकरः इति। २—शिवं तत्त्वतो ज्ञात्वा अर्जुनः दानवकुले—दानवकुलविषयको यो भ्रमो मिथ्याज्ञानं तद्रहितो जातः, अयं स्पष्टो भावः, कश्चिद् दानवकुलोत्पन्न एवैष मया सह युध्यते इति योयमर्जुनस्य भ्रम आसीत्, स शिवे ज्ञाते निवृत्तः। अत्र तपश्चरितुं गतस्यार्जुनस्य किरातवेषेण महादेवेन सह युद्धमभूदित्यैतिह्यं महाभारतादत्रधेयम्।

इत्येकालापकजातिः।

अथ प्रभिन्नकं लक्षयति—

*** शब्दार्थं (?) लिङ्गवचनैर्व्यस्तैर्यद् वा समस्तकैः।**
**विभक्त्या चा प्रभिन्नं (?) यत् तत् प्रभिन्नकमुच्यते॥४१॥**

---

* शब्दार्थौ—इति स्यात्, † अभिन्नं—इति स्यात्।

यत्र शब्दार्थौ लिङ्गेन पुंनपुंसकादिना, वचनेन एकवचनद्विवचनादिना, विभक्त्या च, प्रभिन्नौ भेदं प्राप्तौ, तद् व्यासेन समासेन वा पृच्छ्यमानमुत्तरं प्रभिन्नकमुच्यते। तत्र पूर्वं लक्षणोक्तक्रमेण पुंनपुंसकादिना यत्र शब्दार्थौ भिद्येते तदुदाहरति।

**निर्जितसकलारातिः पृच्छति**
**को नैको मृत्योर्भयमृच्छति।**
**मेघात्ययकृतरुचिराशायाः**
**किं तिमिरक्षयकारि निशायाः॥ ४२॥**

**निर्जितेति,** १—निर्जिताः सकला अरातयः शत्रवो येन सः, पृच्छति यत् कः, एकः केवलः, मृत्योर्भयं न ऋच्छति न प्राप्नोति? २—मेघात्ययेन मेघाभावेन शरदृतुना वा कृता रुचिरा मनोज्ञा आशा दिशो यस्यां तादृश्या निशाया रात्रेः तिमिरक्षयकारि अन्धकारविनाशकरं किम्?

अस्योत्तरं **विधुतारातेजः**। १—हे 'विधुताराते' विधुता विकम्पिता निर्जिता इति यावत् अरातयो येन स विधुतारातिः, तत्सम्बोधने विधुताराते, 'अजः' अजन्मा ईश्वरः केवलं मृत्युभयं न प्राप्नोति। एतत् पदविभागेनोत्तरम्। समुदायेन द्वितीयप्रश्नोत्तरं यथा 'विधुतारातेजः' विधोश्चन्द्रमसः, ताराणां नक्षत्राणां च तेजस्तिमिरक्षयकारि। अत्र पुंनपुंसकाभ्यां लिङ्गाभ्यां शब्दार्थभेदः।

अस्य द्वितीयमुदाहरणं यथा—

**विहगपतिः कं हतवानहितं कीदृग् भवति पुरं जनमहितम्।**
**किं कठिनं विदितं वद धीमन् यादःपतिरपि कीदृक् भयकृत्॥४३॥**

**विहगेति,** १—विहगानां पतिर्गरुडः, कम् अहितं शत्रुम्, हतवान्? २—जनैर्महितं स्तुतं पुरं कीदृग् भवति? ३—हे धीमन् किं कठिनं विदितं प्रसिद्धम् इति वद। ४—यादःपतिः समुद्रोऽपि कीदृग् भयकृत् भयोत्पादकः?

अस्योत्तरम्—**अहिमकरमयः**। १—विहगपतिः 'अहिम्' सर्पं हतवान्। २—'अकरम्' करशून्यं स्वल्पकरं वा पुरं जनैः स्तूयते। राजदेयभागः कर उच्यते। ३—'अयः' लौहं कठिनत्वेन प्रसिद्धम्। इदं व्यासेन। चतुर्थोत्तरं तु समासेन—अहयो मकराश्च प्राचुर्येण यत्र विद्यन्ते तादृशः समुद्रो भयकृत्।

प्राचुर्ये मयट्। अत्रापि पूर्ववल्लिङ्गभेदेन शब्दार्थभेदः।

विभक्तिभिन्नमुदाहरति—

**अनुकूलविधायिदैवतो विजयी स्यान्ननु कीदृशो नृपः।**
**विरहिण्यपि जानकी वने निवसन्ती मुदमादधौ कुतः ॥४४॥**

**अनुकूलेति,** १—अनुकूलं विधत्त इत्यनुकूलविधायि समीहितसाधकं दैवतं भाग्यं यस्य तथाभूतः कीदृशो नृपः विजयी भवति ? २—वने निवसन्ती विरहिण्यपि पतिवियुक्तापि जानकी सीता कुतः कस्माद्धेतोः मुदमादधौ हर्षवती बभूव ?

अस्योत्तरम्—**कुशलवर्द्धितः** । १—कुशलैः शुभसूचकशकुनैर्वर्धित उत्साहित इति यावत् नृपतिर्विजयी भवति। २—विरहिण्यपि सीता कुशलवयोः स्वपुत्रयोः ऋद्धितो हर्षमवाप । अत्र प्रथमापञ्चमीभ्यां विभक्तिभ्यां शब्दार्थभेदः।

अस्यैवापरमुदाहरणं यथा—

**कुसुमं पतदेत्य नाकतो वद कस्मै स्पृहयन्ति भोगिनः।**
**अधिगम्य रतं वराङ्गना क नु यत्नं कुरुते सुशिक्षिता ॥४५॥**

**कुसुममिति,** १—भोगिनो विलासिनः, नाकतः स्वर्गात्, पतत् कुसुमं पुष्पम्, एत्य प्राप्य, कस्मै वस्तुने स्पृहयन्ति स्पृहां कुर्वन्ति ? २—सुशिक्षिता अधिगतकामशास्त्ररहस्या वराङ्गना रतमधिगम्य रममाणेत्यर्थः, क नु कस्मिन् विषये, यत्नं कुरुते ?

अस्योत्तरम्—**सुरतरवे** । तत्र प्रथमप्रश्नोत्तरम्—'सुराणाम्' देवानां 'तरवे' वृक्षाय कल्पपादपायेत्यर्थः, स्वर्गतः सुरतरोरेव पुष्पपातः सम्भाव्यते, तच्च पुष्पमलौकिकसौरभमनुभूय भोगिनां तद्वृक्षप्राप्तीच्छा स्वाभाविकी । द्वितीयमुत्तरं 'सुरतस्य' निधुवनस्य 'रवे' निधुवनकालिके शब्दे। रममाणाः कामिन्यस्तथा कुर्वन्त्येव। अत्र सप्तमीचतुर्थीविभक्तिभ्यां शब्दार्थभेदः ।

वचनभिन्नमुदाहरति—

**कामुज्जहार हरिरम्बुधिमध्यमग्नां-**
**कीदृक् श्रुतं भवति निर्मलमागमानाम् ।**

**आमन्त्रयस्व वनमग्निशिखावलीढं-**
**तच्चापि को दहति के मदयन्ति भृङ्गान् ॥४६॥**

**कामिति**, १—हरिर्नारायणः, अम्बुधेः समुद्रस्य, मध्ये निमग्नां काम् उज्जहार उद्धृतवान्? २—आगमानां शास्त्राणाम्, निर्मलं शङ्कापङ्कविरहितम् अन्तःकरणनिर्मलतासम्पादकं वा श्रुतं श्रवणं कीदृग् भवति? ३—अग्नेः शिखाभिर्ज्वालाभिः, अवलीढमाक्रान्तम्, वनम्, आमन्त्रयस्व सम्बोधय, ४—तद् वनं च को दहति? ५—भृङ्गान् के मदयन्ति हर्षयन्ति?

अस्योत्तरम्—**कुन्दमकरन्दविन्दवः**। तथाहि १—हरिः 'कुम्[1]' पृथ्वीमुद्धृतवान् वराहावतारे। २—आगमश्रवणं 'दमकरम्' दमो मनोनिग्रहः, तत्करं भवति। ३—अग्निशिखाक्रान्तवनवाचकपदस्य सम्बुद्धिविभक्त्यन्तं रूपम्—हे 'दविन्' इति दवो वनवह्निरस्यास्तीति दवी, सम्बुद्धौ दविन्निति। ३—'दवः' वनाग्निः वनं दहति। ४—भृङ्गान् 'कुन्दमकरन्दविन्दवः' कुन्दानां माघमासभवानां पुष्पविशेषाणां मकरन्दः पुष्परसः, तद्विन्दवः, मदयन्ति। अत्र विन्दव इति बहुवचनम्, दव इति चैकवचनम्, अतो वचनभिन्नोदाहरणमिदम्।

अस्यैव द्वितीयं यथा—

**वसति कुत्र सरोरुहसन्ततिर्दिनकृतो ननु के तिमिरच्छिदः।**
**पवनभक्षसपत्नरणोत्सुकं पुरुषमाह्वय, को जगति प्रियः ॥४७॥**

**वसतीति**, १—सरोरुहाणां कमलानां सन्ततिः समूहः, कुत्र वसति! २—दिनकृतः सूर्यस्य सम्बन्धिनः के पदार्थाः, तिमिरच्छिदः अन्धकारनिवर्तकाः सन्ति? ३—पवनं भक्षयन्ति पवनभक्षाः सर्पाः, तेषां सपत्नाः शत्रवो मयूराः, तेषां रणे शब्दे परस्परयुद्धे वा उत्सुकं पुरुषमाह्वय—सम्बोधनविभक्त्यन्तपदेनाकारय ४—जगति प्रियः कः?।

अस्योत्तरम्—**केकिरणोत्कराः**। १—सरोरुहवसतिः 'के' जले वर्तते। २—दिनकृतः 'किरणोत्कराः' रश्मिसमूहाः तिमिरच्छिदः। ३—मयूररणोत्सुकस्य आह्वानपदम् 'हे केकिरणोत्क' इति, केका मयूरवाणी, सा येषामस्ति, ते

---

१—गोत्रा कुः पृथिवी पृथ्वी—इत्यमरः।

केकिनो मयूराः, तेषां रणे, उत्कः उत्कण्ठितः, सम्बोधने एङ्ह्रस्वादिति सम्बुद्धि-लोपः। ४—'राः' धनं जगति प्रियः। अत्रापि पूर्ववद् एकवचनबहुवचनभेदः।

पूर्वं तु लिङ्गभेदादीनां पृथक्पृथगुदाहरणानि दत्तानि, इदानीं द्वयो-स्त्रयाणां वा भेदमेकत्रैवोदाहरति। तत्र पूर्वं लिङ्गविभक्तिभिन्नस्योदाहरणं यथा—

**कीदृग् गृहं याम्यगृहं गतस्य,**
**कास्त्राणमम्भस्तरणे जनानाम्।**
**भूषा न ते कण्ठ! कथं नु पृष्टे,**
**मुक्ताकलापैरिति चोत्तरं किम्? ॥ ४८॥**

**कीदृगिति** १—यमस्येदं याम्यं यमराजसम्बन्धि गृहं गतस्य मृत्युं प्राप्तस्य पुरुषस्येत्यर्थः, गृहं कीदृग् भवति? २—अम्भसां जलानां तरणे, जनानां त्राणं रक्षणोपायभूताः काः सन्ति? ३—हे कण्ठ? ते भूषा अलङ्कारः, कथं न इति मुक्ताकलापैः मुक्ताहारैः, (कण्ठं प्रति) पृष्टे सति च (कण्ठस्य) किमुत्तरम्?

अत्रोत्तरम्—**हाराविनावः**। तथाहि १—मृतस्य गृहं 'हाराविं' भवति। 'हा' इति दुःखसूचको निपातः, हा इति रावः शब्दो यत्रास्ति, तद् हाराविं। २—अम्भस्तरणे रक्षणोपायः 'नावः' नौकाः। ३—मुक्ताहारान् प्रति कण्ठ-स्योत्तरम्—'हारा! विना वः' हे हाराः, वः युष्मान्, विना, मम (कण्ठस्य) भूषा नेति शेषः। अत्र 'वः' 'नावः' इति द्वयोरपि बहुवचनत्वाद् वचनभेदस्तु नास्ति, लिङ्गविभक्त्योस्तु भेदः, अतो लिङ्गविभक्तिभिन्नस्योदाहरणमिदम्।

अस्यैव द्वितीयं यथा—

**कवयो वद कुत्र कीदृशाः कठिनं किं विदितं समन्ततः।**
**अधुना तव वैरियोषितां हृदि तापः प्रबलो विहाय काः॥४९॥**

**कवय इति,** १—कवयः कुत्र कीदृशा भवन्ति इति वद, २—समन्ततः कठिनं कठोरं किं वस्त्वस्ति? ३—अधुना इदानीम्, प्रबलः तापः, तव वैरियोषितां शत्रुसुन्दरीणां हृदि, का विहाय कास्त्यक्त्वा अस्ति?

अस्योत्तरम्—**गिरिसारमुखाः**। १—कवयः, 'गिरि' वाण्यां 'सारमुखाः' सारं प्रधानं श्रेष्ठं वा मुखं येषां तादृशाः, काव्योक्तौ कविमुखमेव प्रधानं श्रेष्ठं वास्ति

इति भाव: । २—' गिरिसारम् ' अयः समन्ततः कठोरं भवति । ३—'उखाः' रन्धनस्थालीर्विहाय प्रबलः तापः शत्रुसुन्दरीहृदि वर्त्तते, यदा शत्रुनार्यो जीवत्पतिका उखासु नानाविधव्यञ्जनजातं साधयित्वा भुञ्जते स्म, तदा उखानां चुल्ल्यधिश्रयणेनाग्नितापो जातः, इदानीं तु स ताप उखाः परित्यज्य शत्रुसुन्दरीराशिश्राव, यतस्ताः पतिविरहदुःखिता भोजनमकृत्वैव दिवसं नयन्ति, तथा च उखानां न भवति तापप्रसङ्गः । अत्रापि पूर्ववल्लिङ्गविभक्तिभेदः ।

अथ लिङ्गवचनभिन्नमुदाहरति—

**मेघात्यये भवति किं सुभगावगाहं**
**का वा विडम्बयति चारणमल्लवेश्याः ॥**
**दुर्वारवीर्यविभवस्य भवेद् रणे कः**
**काः स्मेरवक्त्रसुभगास्तरणिप्रभाभिः ॥ ५० ॥**

**मेघेति** १—मेघात्यये शरदि, सुभगः सुखकरः, अवगाहः स्नानं यत्र तादृशं किम् ? २—चारयन्ति कीर्तिमिति चारणाः स्तुतिपाठकाः, मल्लाः शारीरयुद्धपटवो बलिष्ठाश्च, वेश्याः वारविलासिन्यः, एतान् सर्वान् का विडम्बयति वञ्चयति ? ३—रणे संग्रामे दुर्वारो दुरतिक्रमः, वीर्यविभवः पराक्रमैश्वर्यं यस्य तादृशस्य राज्ञः कः भवेत् ? ४—तरणेः सूर्यस्य प्रभाभिः, स्मेराणि विकसितानि वक्त्राणि मुखानि अग्रभागा यासां ताः, अत एव सुभगा मनोज्ञाश्च काः ?

अस्योत्तरम्—**सरोजराजयः** । शरदि सुभगावगाहं ' सरः ' । २—चारणान्, मल्लान्, वेश्याश्च ' जरा ' वार्धक्यं विडम्बयति, यतो वृद्धावस्थायामिमे स्तुतिपाठादिस्वस्वकार्यं कर्तुं न शक्नुवन्ति । ३—रणे दुरतिक्रमवीर्यस्य ' जयः ' भवति । ४—सूर्यकिरणैः 'सरोजराजयः' कमलश्रेण्यो विकसन्त्यः शोभन्ते । अत्र ' राजयः ' ' जयः ' इति लिङ्गवचनयोर्भेदः ।

अस्यैव द्वितीयमुदाहरणं यथा—

**पृच्छति शिरसिरुहो मधुमथनं**
**मधुमथनस्तं शिरसिरुहं च ।**
**कः खलु चपलतया भुवि विदितः,**
**का ननु यानतया गवि गदिता: ॥५१॥**

**पृच्छतीति**—शिरसिरुहः केशः, मधुमथनं मधुदैत्यविनाशकरं नारायणं पृच्छति, मधुमथनश्च शिरसिरुहं पृच्छति, किं पृच्छति तत् प्रतिपादयति—कः खल्विति, भुवि चपलतया विदितः प्रसिद्धः कः ? गवि* जले यानतया वाहनतया का गदिता उक्ताः ? ।

अस्योत्तरम्—**केशवनौकाः** । हे 'केश' ! हे बाल ! 'वनौकाः' वनम् ओको गृहं यस्य स वानरः भुवि चपलतया प्रसिद्धः । हे 'केशव' ! हे नारायण ! 'नौकाः' जले यानतया उक्ताः । अत्रापि 'नौकाः' 'वनौकाः' इति पूर्ववल्लिङ्गवचनभेदः ।

अथ विभक्तिवचनभिन्नमुदाहरति—

**न भवति मलयस्य कीदृशी भूः,**
**क इह कुचं न बिभर्ति, कं गता श्रीः ।**
**भवदरिनिवहेषु कास्ति नित्यं**
**बलमथनेन विपद् व्यधायि केषाम् ॥५२॥**

**नेति**, १—मलयस्य मलयपर्वतस्य, भूः पृथ्वी, कीदृशी न भवति ? २—इह जगति, कः कुचं न बिभर्ति ? ३—श्रीः कं गता ? ४—भवतामरिनिवहेषु शत्रुसमूहेषु का नित्यमस्ति वर्तते ? ५—बलमथनेन बलदैत्यनिषूदनेनेन्द्रेण केषां विपद् व्यधायि आपादिता ? ।

अस्योत्तरम्—**विपन्नगानाम्** । १—मलयपर्वतभूमिः 'विपन्नगा' विगताः पन्नगाः सर्पाः यस्याः सकाशात्तादृशी नास्ति । २—'ना' नरः कुचं न बिभर्ति । ३—'अम्' विष्णुं श्रीर्गता । ४—भवच्छत्रुगणे 'विपद्' नित्यं तिष्ठति । ५—इन्द्रेण पक्षच्छेदनद्वारा 'नगानाम्' पर्वतानां विपद् व्यधायि । अत्र 'अम्' इति नगानामिति च विभक्तिवचनयोरेव भेदः, न तु लिङ्गस्यापि ।

अस्यैव द्वितीयं यथा—

**समयमिह वदन्ति कं निशीथं**

---

* 'स्वर्गेषुपशुवाग्वज्रदिङ्नेत्रघृणिभूजले लक्ष्यदृष्ट्या स्त्रियां पुंसि गौः' इत्यमरः ।

शमयति कान् वद वारिवाहवृन्दम् ।
वितरति जगतां मनःसु कीदृङ्
मुदमतिमात्रमयं महातडागः ॥ ५३ ॥

**समयेति,** १—इह जगति, कं कीदृशं समयं † निशीथं रात्रि वदन्ति ? २—वारिवाहानां मेघानां वृन्दं समूहः कान् शमयति विनाशयति ३—अयं महातडागः कीदृक् सन् जगतां मनःसु अतिमात्रमत्यन्तं मु वितरति ?

अस्योत्तरम्—**अरविन्दवान्** । १—'अरविम्' रविः सूर्यः, तद्रहि समयं निशीथं वदन्ति । २—वारिवाहवृन्दं 'दवान्' वनाग्नीन् शमयति । ३— 'अरविन्दवान्' अरविन्दानि कमलानि, तद्युक्तो महातडागो जनमनसामानन्द करः । 'दवान्' इति पुंसि द्वितीयाबहुवचनम्; 'अरविन्दवान्' इति च पुं प्रथमैकवचनम्, अतोऽत्रापि पूर्ववद् विभक्तिवचनभेदः ।

लिङ्गविभक्तिवचनभिन्नमुदाहरति—

कीदृक्तं समिति बलं निहन्ति शत्रु-
विष्णोः का मनसि मुदं सदा तनोति ।
शून्यं सच्छरधिमुखं निगद्यते किं-
पञ्चत्वैः सममपमान एव केषु ॥५४॥

**कीदृक्तमिति,** १—कीदृक्तं कीदृशं बलं सैन्यं समिति संग्रामे श निहन्ति ? २—द्वितीयपादार्थःसुगमः । ३—शरा धीयन्तेऽस्मिन्नसौ शरधिस्तूण रम्, तस्य मुखं शून्यं बाणरहितं सत् किं निगद्यते उच्यते ? ४—केषु पुरु अपमानः पञ्चत्वैः समं मरणतुल्यम् ?

अस्योत्तरम्—**अभिमानिषु** १—'अभि' निर्भयं बलं समि शत्रुघातकम् । न भीर्भयं यस्य तद् अभीतिविग्रहः, ह्रस्वो नपुंसक इति ह्रस्वत्व २—'मा' लक्ष्मीर्विष्णोर्मनसि मुदं तनोति । ३—शून्यं शरधिमुखम् 'अनि निगद्यते । न इषवो बाणा यत्र तद् अनिष्विति विग्रहः । ४—'अभिमानिषु

† 'नक्तं निशीथो रजनी रात्रिर्दोषा विभावरी' इति ताराभिधानः ।

मनस्विपुरुषेषु अपमानो मरणतुल्यः, अभिमानिनः खलु मरणमपमानश्च तुल्यं मन्यन्ते । 'अनिषु' इति नपुंसके प्रथमैकवचनम्, 'अभिमानिषु' इति पुंसि सप्तमीबहुवचनम्, अतोऽत्र त्रयाणामपि लिङ्गविभक्तिवचनानां भेदः ।

अस्यैव द्वितीयं यथा—

**घनसमये शिखिषु स्यान्नृत्यं कीदृक्षु किं घनात् पतति ।**
**प्रावृषि कस्य न गमनं मानसगमनाय कीदृशा हंसाः॥५५॥**

**घनेति,** १—घनसमये वर्षासु, कीदृक्षु किंविधेषु शिखिषु मयूरेषु नृत्यं स्यात् ? २—घनात् किं पतति ? ३—प्रावृषि वर्षर्तौ कस्य गमनं न भवति ? ४—हंसा मानसे मानससरोवरे गमनाय कीदृशा भवन्ति ? ।

अस्योत्तरम्—**समुत्सुकमनसः** । १—'समुत्सु' मुद् आनन्दः, तत्सहितेषु शिखिषु घनसमये नृत्यं भवति, मुदा सह वर्तन्ते इति समुदः, तेष्विति विग्रहः । २—घनात् 'कम्' जलं पतति । ३—'अनसः' शकटस्य प्रावृषि गमनं न भवति, मार्गाणां कर्दमप्रायत्वात् । ४—हंसा मानसगमनाय 'समुत्सुकमनसः' समुत्सुकं सम्यगुत्कण्ठितं मनो येषां तादृशा भवन्ति । पूर्ववदत्रापि लिङ्गादीनां त्रयाणां भेदः ।

अथ मतान्तरे प्रभिन्नकस्य लक्षणान्तरमाह—

**अर्थमात्रैकभेदेन भिन्नं बध्नन्ति केचन ।**
**सुकुमारधियस्तच्च विदग्धैर्नादृतं यथा ॥५६॥**

**अर्थेति,** केचन सुकुमारधियः अविदग्धाः, अर्थमात्रैकभेदेन केवलार्थभेदेनापि व्यवस्थितं पूर्वलक्षिताद् भिन्नं प्रभिन्नकजातिभेदं निबध्नन्ति निरूपयन्तीत्यर्थः, अयं भावः-यत्र उत्तरात्मकः शब्दः, अर्थमात्रेण भिद्यते, परं तत्र लिङ्गविभक्तिवचनभेदकृतः शब्दभेदो नास्ति, सोप्येकतमः प्रभिन्नकभेदः । परमेष भेदो विदग्धैर्नाद्रियते, एतादृशस्योत्तरस्य सुकुमारमतिभिरप्युन्नेतुं शक्यत्वात् !

तदुदाहरणं यथा—

**आनन्दयति कोत्यर्थं सज्जनानेव भूतले ।**
**प्रबोधयति पद्मानि तमांसि च निहन्ति कः ॥५७॥**

**आनन्दयतीति,** त्रिगदव्याख्यातं प्रथम ।

अस्योत्तरम्—**मित्रोदयः**। १—मित्राणां सुहृदामुदयोऽभ्युदयः सज्जना अत्यन्तमानन्दयति । २—मित्रस्य सूर्यस्य उदय उद्गमः, पद्मानि प्रबोधयति तमांसि च निहन्ति। अत्रार्थमात्रे भेदः, लिङ्गादिभेदस्तु नास्ति ।

द्वितीयमुदाहरणं यथा—

**अटवी कीदृशी प्रायो दुर्गमा भवति प्रिये ।**
**प्रियस्य कीदृशी कान्ता तनोति सुरतोत्सवम् ॥५८॥**

**अटवीति,** १–हे प्रिये कीदृशी अटवी अरण्यम्, प्रायो बाहुल्येन दुर्गमा दु:खेन गन्तुं शक्या भवति ? २—कीदृशी कान्ता रमणी प्रियस्य पत्युः सुरतोत्सवं निधुवनानन्दं तनोति ?।

अस्योत्तरम्—**मदनवती**। १—मदनाः तदाख्यवृक्षविशेषाः, तद्वत्यरण्यं दुर्गमा। २—मदनः कामः, तद्वती च कान्ता पत्युः सुरतोत्सवं तनोति।

अस्यैव तृतीयं यथा—

***यादृशो जनिमाप्नोति तादृशः को विनश्यति ।**

---

*एष प्रभिन्नकभेदो हिन्दीभाषायामप्युपलभ्यते। ‘खुसरो’ निर्मितानि कानिचिदुदाहरणान्यत्रोद्ध्रियन्ते—

| | |
|---|---|
| १—सितार क्यों न बजा ?<br>औरत क्यों न नहाई ? | अनयोरुत्तरम् ‘परदा न था’ |
| २—संबोसा क्यों न खाया ?<br>जूता क्यों न चढ़ाया ? | ,, ‘तला न था’ |
| ३—घोड़ा अड़ा क्यों ?<br>पान सड़ा क्यों ? | ,, ‘फेरा न था’ |
| ४—अनार क्यों न चक्खा ?<br>वज़ीर क्यों न रक्खा ? | ,, ‘दाना न था’ |
| ५—गोश्त क्यों न खाया ?<br>डोम क्यों न गाया ? | ,, ‘गला न था’ |
| ६—ब्राह्मण प्यासा क्यों ?<br>गधा उदासा क्यों ? | ,, ‘लोटा न था’ |

हरस्य प्रीतिमाप्नोति प्रसवैः कश्च धूसरः ॥५६॥

**यादृश** इति, १—यादृशः सन्, जनिं जन्म, आप्नोति, तादृशः सन्नेव कः विनश्यति ? २—धूसरः ईषत्पाण्डुवर्णः, कः पदार्थः, स्वपुष्पैः, हरस्य प्रीतिं प्राप्नोति महादेवाय रोचत इत्यर्थः ?

अस्योत्तरम्—**अर्कः**। १—अर्कः सूर्यो यादृशो रक्तः, जनिमाप्नोति (उदयते) तादृशो रक्त एव विनश्यति (अस्तमयते) २—एवम् अर्कः वृक्षविशेषः स्वपुष्पैर्महादेवाय रोचते। अर्कपुष्पैर्हरः प्रीयत इति शैवाः। अत्रापि पूर्ववदर्थमात्रभेदः। इति प्रभिन्नकजातिः।

साम्प्रतं प्रभिन्नकोदाहरणेषु शब्दार्थोभयभेदस्य लिङ्गादिभेदस्य चावश्यकर्तव्यतां निर्दिशति भिन्नेत्यादिना—

भिन्नाववश्यं कर्तव्यौ शब्दार्थौ प्रश्नपण्डितैः।
लिङ्गादिषु यथाशक्ति भेदमाहुर्मनीषिणः॥ ६०॥

इति बौद्धश्रीधर्मदास सूरि विरचिते विदग्धमुखमण्डनाख्यकाव्यालङ्कारशास्त्रे
प्रथमः परिच्छेदः।

**भिन्नेति**—प्रश्नपण्डितैः शब्दार्थौ अवश्यं भिन्नौ कर्तव्यौ। एवमेव मनीषिणः विद्वांसः, लिङ्गादिष्वपि, यथाशक्ति यावच्छक्यं भेदमाहुः, शब्दार्थयोरिव लिङ्गादीनामपि भेदः कर्तव्य एव, अर्थभेदमात्रपर्यवसितस्योत्तरस्य तु अविदग्धैरप्यूहनात्, विशेषचमत्कृत्यनाधानाच्चेति भावः।

इति श्रीपरमेश्वरानन्दशर्मकृतायां विदग्धमुखमण्डनव्याख्यायां
प्रथमः परिच्छेदः।

---

# अथ द्वितीयः परिच्छेदः

भेद्यभेदकजातिं लक्षयति—

**विशेषणं विशेष्यं च यत्र प्रश्ने विधीयते ।**
**भेद्यभेदकमाहुस्तं प्रश्नं प्रश्नविदो यथा ॥ १ ॥**

**विशेषणमिति**—यत्र प्रश्ने प्रश्नवाक्ये विशेषणं विशेष्यं च विधीयते जिज्ञास्यतयेति शेषः, यत्र विशेष्यविशेषणोभयविषयकः प्रश्न इति भावः, तं प्रश्नं प्रश्नविदः भेद्यभेदकम् आहुः। भेद्यं विशेष्यम्, भेदकं विशेषणम्, अनयोः समाहारो भेद्यभेदकम्, तद्विषयकत्वात् प्रश्नोऽपि भेद्यभेदकः । यथेत्युदाहरणनिर्देशः ।

अथोदाहरति—

**कीदृक् किं स्यान्न मत्स्यानां हितं स्वेच्छाविहारिणाम्।**
**गुणैः परेषामत्यर्थं मोदते कीदृशः पुमान् ॥ २ ॥**

**कीदृगिति,** १–स्वेच्छाविहारिणां मत्स्यानां कीदृक् किं हितं न स्यात् ? २–कीदृशः पुमान् परेषां गुणैः दयादाक्षिण्यादिभिः, अत्यर्थं निरतिशयं मोदते ? अत्र पूर्वार्धे 'कीदृक्' इति विशेषणविषयकः, 'किम्' इति च विशेष्यविषयकः प्रश्नः, अत एवायं भेद्यभेदकप्रश्नः ।

अत्रोत्तरम्—**विमत्सरः** । १—वयः पक्षिणो विद्यन्ते यत्र तद् 'विमद्' 'सरः' तडागो मत्स्यानां हितं न भवति । २—विगतो मत्सरः अन्यशुभद्वेषो यस्य स 'विमत्सरः' पुरुषः परगुणैरधिकं मोदते ।

अस्यैव द्वितीयं यथा—

**अगस्त्येन पयोराशेः कियत् किं पीतमुज्झितम् ।**
**त्वया वैरिकुलं वीर समरे कीदृशं कृतम् ॥ ३ ॥**

**अगस्त्येनेति,** १—अगस्त्येन मुनिना पयोराशेः समुद्रस्य कियत् कियत्परिमाणं किं वस्तु पीतम्, पश्चादुज्झितं त्यक्तं च ? २—हे वीर! त्वया समरे वैरिणां कुलं समूहः कीदृशं कृतम् ? ।

अस्योत्तरम्—**सकलङ्कम्**। १—अगस्त्येन समुद्रस्य 'सकलम्' समग्रं, 'कम्' जलं पीतम्, पश्चात् सकलं तदेव मूत्ररूपेणोज्झितं च। २—त्वया च वीरेण वैरिकुलं 'सकलङ्कम्' कलङ्कसहितं कृतम्।

अथ क्रमप्राप्ताम् ओजस्विजातिं लक्षयति—

**दीर्घवृत्तेन यत् पृष्टमुत्तरं कियदक्षरम्।**
**तदोजस्वीति विख्यातमूर्जितं चेति केचन ॥४॥**

**दीर्घेति,** यत् कियदक्षरम् अल्पवर्णम् उत्तरं दीर्घवृत्तेन बह्वक्षरपद्येन पृष्टं भवति, तत् पृष्टम् 'ओजस्वि' इति नाम्ना विख्यातं प्रसिद्धम्। अयं भावः यत्र प्रश्नवाक्यमतिविस्तीर्णम्, उत्तरं तु तस्यातिसंक्षिप्तमत्यल्पवर्णं भवति, तद् 'ओजस्वि' पृष्टम् उच्यते। तदेव केचन 'ऊर्जितम्' इत्याहुः।

तदुदाहरणं समस्तोत्तरं यथा—

**कामिन्याः स्तनभारमन्थरगतेर्लीलाचलच्चक्षुषः**
**कन्दर्पैकविलासनित्यवसतेः कीदृक् पुमान् वल्लभः।**
**हेलाकृष्टकृपाणपाटितगजानीकात् कुतस्तेऽरयः**
**त्रासायासविशुष्ककण्ठकुहरा निर्यान्ति जीवार्थिनः ॥५॥**

**कामिन्या इति,** १—स्तनयोर्भारेण मन्थरा अशीघ्रा गतिर्यस्यास्तादृश्याः, लीलया विलासेन चलती चक्षुषी यस्यास्तथाभूतायाः, कन्दर्पस्य कामस्य य एकोऽद्वितीयो विलासः, तस्य नित्यवसतेः शाश्वतिकनिवासभूमेः, कामिन्याः, वल्लभः प्रियः, को भवति ? २—त्रासेन भयेन, आयासेन परिश्रमेण च, विशुष्काणि शोषं प्राप्तानि कण्ठकुहराणि गलविवराणि येषां ते जीवार्थिनः प्राणरक्षाभिलाषिणः, ते तव, अरयः, हेलया लीलयैव आकृष्टेन कोशाद् निष्कासितेन कृपाणेन पाटितं विदारितं गजानाम् अनीकं सेना यत्र तादृशात्, कुतः कस्मात् स्थानात्, निर्यान्ति पलायन्ते ?

अस्योत्तरम्—**समरतः**। १—समं तुल्यं स्वानुरूपं रतं निधुवनं यस्य स जनः कामिन्या वल्लभो भवति, समविषमादिरतिभेदाः कामशास्त्रे प्रसिद्धाः। २—समरतः संग्रामात्, त्वदरयो निर्यान्ति।

अस्यैव द्वितीयमुदाहरणं व्यस्तोत्तरं यथा—

दैत्यारातिरसौ वराहवपुषा कामुज्जहाराम्बुधेः
का रूपं विनिहन्ति ? को मधुवधूवैधव्यदीक्षागुरुः ?।
स्वच्छन्दं नवशल्लकीकवलनैः पम्पासरोमज्जनैः
के विन्ध्याद्रिवने वसन्त्यभिमतक्रीडाविहारोत्सुकाः॥६॥

दैत्येति, १—असौ दैत्यारातिर्नारायणः, वराहवपुषा शूकरशरीरेण, अम्बुधेः समुद्रात्, काम् उज्जहार उद्धृतवान् ? २—रूपं सौन्दर्यं का विनिहन्ति ? ३—मधुवध्वा मधुदैत्यस्त्रियः, वैधव्यस्य विधवात्वधर्मस्य दीक्षागुरुः उपदेष्टा, मधुदैत्यविनाशनेन तत्स्त्रियो वैधव्यापादकः कः ? ४—नवानां शल्लकीनां गजभक्ष्यवृक्षविशेषाणाम्, कवलनैः आस्वादनैः, पम्पासरसि पम्पाख्यसरोवरे, मज्जनैः अवगाहनैश्च, अभिमतेषु इष्टेषु, क्रीडाविहारेषु, उत्सुकाः, के जन्तवः विन्ध्याद्रिवने विन्ध्यपर्वतारण्ये, स्वच्छन्दं यथेच्छं निवसन्ति ?

अस्योत्तरम्—कुञ्जराः। १—नारायणो वराहशरीरेण 'कुम्' पृथ्वीमुज्जहार। २—' जरा ' वार्धक्यं रूपं विनिहन्ति । ३—विन्ध्याद्रिवने ' कुञ्जराः ' हस्तिनो निवसन्ति । अत्रापि प्रश्नः पूर्ववद् बह्वक्षरः, उत्तरं पुनरति स्वल्पाक्षरम् ।

इत्योजस्विजातिः ।

उपमादिरलङ्कारो बहुधा परिकीर्तितः ।
यत्तेन कथ्यते सार्धं सालङ्कारं तदुच्यते ॥७॥

सालङ्कारजातिं निरूपयति उपमादीति, उपमादिरलङ्कारो बहुधा बहुभिः प्रकारैः परिकीर्तितो वर्णित आलङ्कारिकैरिति शेषः। यत् पृष्टं तेन उपमाद्यलङ्कारेण सार्धं कथ्यते पृच्छ्यते तत् सालङ्कारमुच्यते । प्रश्नवाक्यमुपमाद्यलङ्कारयुक्तं चेद् भवति तत् सालङ्कारं पृष्टमित्युच्यत इति स्पष्टो भावः ।

अस्योदाहरणं यथा—

कल्याणवाक् त्वमिव किं पदमत्र कान्त !
सद्भूपतेस्त्वमिव कः परितोषकारी ।
कः सर्वदा वृषगतिस्त्वमिवातिमात्रं-
भूत्याश्रितः कथय पालितसर्वभूतः ॥८॥

**कल्याणेति,** १—हे कान्त ! अत्र जगति, त्वमिव कल्याणवाक्—उच्यतेऽनयेति वाक्, कल्याणस्य वाक् कल्याणवाक्—कल्याणवाचकम्, (कान्तपक्षे कल्याणी वाग् यस्य स इति विग्रहः) पदं किम् ? २—सद्भूपतेः, त्वमिव परितोषकारी संतोषप्रदः, कः ? ३—त्वमिव सर्वदा वृषगतिः वृषेण बलीवर्देन गतिर्गमनं यस्य तादृशः, (कान्तपक्षे—वृषेण[1] धर्मेण गतिर्व्यवहारो यस्य स इति विग्रहोऽवगन्तव्यम्) अतिमात्रम् अत्यन्तम्, भूत्या भस्मना (कान्तपक्षे—ऐश्वर्येण) आश्रितः, तथा पालिताः सर्वे भूताः प्राणिनो येन तादृशः कः ? इति कथय ।

अस्योत्तरम्—**शङ्करः** । १—'शम्' इति कल्याणवाचकं पदम् । २—'करः' राजदेयभागः, सद्भूपतेः संतोषप्रदः । ३—'शङ्करः' महादेव एव वृषवाहनत्वाद् वृषगतिः, भस्माश्रितः, पालितसर्वभूतश्चास्ति । अत्र प्रश्नवाक्यान्युपमालङ्कारयुक्तानि ।

अस्यैवालङ्कारान्तरयोगि द्वितीयमुदाहरणं यथा—

> **सूर्यस्य का तिमिरकुञ्जरवृन्दसिंही ।**
> **का सत्कवेः सुकृतवारिधिचन्द्रलेखा ॥**
> **पार्थश्च कीदृगरिदावहुताशनोऽभूत् ।**
> **का मालतीकुसुमदाम हरस्य मूर्ध्नि ॥ ६ ॥**

**सूर्यस्येति,** १—तिमिराणि तमांस्येव कुञ्जरवृन्दं हस्तिसमूहः, तस्य कृते सिंही, सिंही कुञ्जरवृन्दस्येव तमसां विनाशयित्रीति भावः, सूर्यस्य सम्बन्धिनी का ? २—सुकृतानि पुण्यान्येव वारिधिः समुद्रः, तत उत्पन्ना चन्द्रलेखा चन्द्रकला, समुद्रादुदिता चन्द्रलेखेव सुकृतराशेः समुद्भूता, सत्कवेः सम्बन्धिनी का ? ३—कीदृक् पार्थः पृथापुत्रोऽर्जुनः, अरीणां कृते दावहुताशनः वनाग्निरभूत्, वनाग्निर्वनानीव शत्रून् व्यनाशयत् ? ४—हरस्य मूर्ध्नि शिरसि मालतीकुसुमदाम मालतीपुष्पमालारूपा का ?

अत्रोत्तरम्—**भागीरथी** । १—सूर्यसम्बन्धिनी 'भाः' कुञ्जरं सिंहीव तिमिरवृन्दमपहन्ति । २—सत्कविसम्बन्धिनी 'गीः' एव सुकृतसमुद्रोत्पन्ना चन्द्रलेखा ।

---

१—वृषो धर्मे बलीवर्दे इति मेदिनी ।

३—' रथी ' सांग्रामिकं रथमारूढोऽर्जुनोऽरिदावहुताशनोऽभूत् । ४—हरमूर्ध्नि स्थिता भागीरथी गङ्गा मालतीपुष्पमालेवाभवत् । अत्र प्रश्नपद्ये पूर्वार्धपादद्वये परम्परितरूपकयोगः, प्रथमे तिमिरे कुञ्जरत्वारोपः प्रभायां सिंहीत्वारोपस्य निमित्तम्, द्वितीयेपि गिरि चन्द्रलेखात्वारोपे सुकृतराशौ वारिधित्वारोपो निमित्तम् । तृतीये पादे तु एकेदशविवर्ति रूपकम्, अरिपु वृक्षत्वारोपस्यार्थत्वात् । चतुर्थे तु निरङ्ग-रूपकम् । यद्यप्यस्य भेदस्य व्यस्तसमस्तजातावेवान्तर्भावो भवितुमर्हति तथापि प्रश्न-वाक्यस्यालङ्कारयोगित्वादस्ति विच्छित्तिविशेष इति पृथगेवायं भेदः प्रश्नपण्डितैराम्नातः।

इति सालङ्कारजातिः ।

अथ सकौतुकं निरूपयति—

**लघुवृत्तेन यत् पृष्टं प्रभूताक्षरमुत्तरम् ।**
**सकौतुकमितीच्छन्ति तद्विदस्तदिदं यथा ॥१०॥**

**लघ्विति,** यत् प्रभूताक्षरं बह्वक्षरमुत्तरं लघुवृत्तेन स्वल्पाक्षरपद्येन पृष्टं भवति, तत् पृष्टं तद्विदः प्रश्नविदः ' सकौतुकम् ' इति नाम्ना व्यपदेष्टुमिच्छन्ति। अयं भावः—यत्र प्रश्नवाक्यं स्वल्पाक्षरं भवति, उत्तरं तु तस्य बह्वक्षरं तत् सकौतुक-मुच्यते, कौतुकावहत्वात् । एष च भेदः ओजस्विविपरीतत्वात्तदनन्तरमेव दर्शयितु-मुचितः । लक्षणपद्ये 'इदं यथा' इत्युदाहरणनिर्देशः ।

अस्योदाहरणं यथा—

**के स्थिराः, के प्रियाः स्त्रीणां, कोऽप्रियो, नक्तमाह्वय ।**
**नृत्यभूः कीदृशी रम्या, नदी कीदृग्घनागमे ॥ ११ ॥**

**क इति,** १—स्थिराः के ?, २—स्त्रीणां प्रियाः के ? ३—अप्रियः कः ! ४—नक्तं रात्रिम् आह्वय सम्बोधय, ५—कीदृशी नृत्यभूः नर्तनभूमिः, रम्या ! ६—घनागमे वर्षर्तौ नदी कीदृक् ?

अस्योत्तरम्—**अगाधवारिपूरजनिततरङ्गाः** । १—'अगाः' पर्वताः स्थिराः । २—'धवाः' पतयः स्त्रीणां प्रियाः । ३—'रिपुः' अप्रियः, रोरीति रेफलोपे ढ्लोपेदीर्घः । ४—हे ' रजनि ' ! इति रात्रिसंबोधनम् । ५—'ततरङ्गा' तता विस्तृतः, रङ्गो नर्तनमञ्चो यस्यां तादृशी नर्तनभूमी रम्या । ६—नदी घनागमे 'अगाधवारिपूरजनिततरङ्गाः' अगाधेन वारिपूरेण जनितास्तरङ्गा यत्र तादृशी ।

उदाहरणान्तरं यथा—

**का कृता विष्णुना कीदृग्योषितां कः प्रशस्यते।**
**असेव्यः कीदृशः स्वामी को निहन्ति निशातमः ॥१२॥**

**केति,** १--विष्णुना का कृता? २--योषितां सम्बन्धसामान्ये षष्ठी योषिद्भिरित्यर्थः, कीदृक् कः प्रशस्यते? ३--कीदृशः स्वामी असेव्यः? ४--निशायास्तमः को निहन्ति?

अस्योत्तरम्--**कुमुदवनबान्धवोदयः**। १--विष्णुना 'कुमुद्' कोः पृथिव्या मुत् प्रीतिः कृता। २--योषिद्भिः 'अवनवान्' अवनं रक्षणं तद्वान् रक्षकः, 'धवः' पतिः प्रशस्यते। ३--'अदयः' दयारहितः स्वामी असेव्यः। ४--'कुमुदवनबान्धवोदयः' कुमुदवनस्य कैरवसमूहस्य बान्धवः बान्धव इव विकासकारकश्चन्द्रः, तस्य उदयः, निशातमो हन्ति। उत्तरे वबयोरभेदः।

इति सकौतुकजातिः।

अथ प्रश्नोत्तरसमजातिं निरूपयति—

**प्रश्नवर्णश्रुतेस्तुल्यं यत्र स्यादुत्तरं वरम्।**
**प्रश्नोत्तरसमं तज्ज्ञास्तदाहुः श्रूयतां यथा ॥१३॥**

**प्रश्न इति,** यत्र वरम् असंदिग्धतया श्रेष्ठमुत्तरम्-उत्तरवाक्यश्रवणं प्रश्नवाक्यवर्णश्रुतेः प्रश्नवाक्यस्थितवर्णश्रवणस्य तुल्यं समानं स्यात्, प्रश्नोत्तरे समानस्वरूपे स्यातामित्यर्थः, तत् पृष्टं तज्ज्ञाः प्रश्नरीतिविदः **प्रश्नोत्तरसमम्** आहुः, प्रश्नोत्तरे समे यत्र तत् प्रश्नोत्तरसमम्। अथवा प्रश्नोत्तरम् समं समकालिकं यत्र तदिति प्रश्नोत्तरसमम्, प्रश्नवर्णैरेवोत्तरस्यापि प्रकटितत्वात्। श्रूयतां यथेत्युदाहरणनिर्देशः।

अथोदाहरति—

**कं दर्पं मदजनकं प्राहुः का च घटी गदिताच्छतमेह।**
**इत्यादिप्रश्ने युक्तं यद् ब्रूत तदुत्तरमाशु विचिन्त्य ॥ १४॥**

**कमिति,** १—मदश्चित्तवृत्तिविशेषः, तज्जनकं दर्पम्—दर्पयतीति दर्पः, णिजन्तात् पचाद्यच्, तं कं प्राहुः? २—इह का कतमा च घटी, अच्छतमा अतिनिर्मला, गदिता? इत्यादिप्रश्ने यद् युक्तमुत्तरं तद् विचिन्त्य आशु शीघ्रं ब्रूत।

अत्रोत्तरम्, १--**कंदर्पं** कामदेवं मदजनकं प्राहुः, २--**काचघटी** काचस्य

घटी कलसी अच्छतमा गादता ।

अस्यैव द्वितीयमुदाहरणं यथा—

**पथि कस्तिष्ठति कष्टं विरही, नावि क आस्ते तत्कृतरक्षः।**
**इत्यादिप्रश्ने युक्तं यद् ब्रूहि तदुत्तरमुत्तमपुरुष ॥ १५ ॥**

**पथीति,** १–पथि मार्गे को विरही कष्टं तिष्ठति ? २—नावि नौकायां तत् नौकया कृता रक्षा यस्य तादृशः सन् कः आस्ते ? । उत्तरार्ध स्पष्टम् ।

अस्योत्तरम्, १—'**पथिकः**' पान्थो विरही कष्टं तिष्ठति ? २—'**नाविकः**' नौकाचालकः 'केवट' इति प्रसिद्धः नावि आस्ते । अनयोरुभयोरप्युदाहरणयो एव प्रश्नस्तदेवोत्तरम् । अन्यान्यपि सन्ति प्रश्नोत्तरसमस्योदाहरणानि । यथा—"का काली का मधुरा का शीतलवाहिनी गङ्गा कं संजघान कृष्णः, बलवन्तं न बाधते शीतम्" अत्रापि काकानाम् आली काकाली काली भवतीत्यादि प्रश्नवर्णैरेवोत्तरमप्युपलभ्यते ।

इति प्रश्नोत्तरसमजातिः ।

पृष्टप्रश्नं लक्षयति

**यस्मिन्नुत्तरमुच्चार्य प्रश्नस्तस्यैव पृच्छ्यते ।**
**पृष्टप्रश्नं तदिच्छन्ति प्रश्नोत्तरविदो यथा ॥ १६ ॥**

**यस्मिन्निति,** यस्मिन् प्रश्नवाक्ये उत्तरमुच्चार्य तस्यैव उत्तरस्य प्रश्नः पृच्छ्यते अयं भावः, यत्र "यस्यैवंविधमुत्तरं भवति स प्रश्नः कीदृशः" इत्येवं प्रश्नविषयः प्रश्नः क्रियते, तत् प्रश्नोत्तरविदः पृष्टप्रश्नम्-इच्छन्ति पृष्टप्रश्नशब्देन व्यपदेष्टुमिच्छन्तीत्यर्थः । पृष्टः प्रश्नविषयीकृतः प्रश्नो यत्रेति संज्ञाविग्रहः । यथेति पूर्ववदुदाहरण निर्देशः ।

अथोदाहरति,

**लक्ष्मणेत्युत्तरं यत्र प्रश्नः स्यात्तत्र कीदृशः ।**
**ग्रीष्मे द्विरदवृन्दाय वनाली कीदृशी हिता ॥ १७ ॥**

**लक्ष्मण इति,** १—यत्र प्रश्नवाक्ये लक्ष्मणा, इत्युत्तरं तत्र प्रश्नः कीदृशः स्यात् ? २–ग्रीष्मे द्विरदवृन्दाय हस्तिसमूहाय कीदृशी वनाली वनपङ्क्तिः हिता ?

अस्योत्तरं–**का सारसहिता** । १—सारसैः सारसपक्षिभिः हिता प्रिया का

इति प्रश्नस्यैव 'लक्ष्मणा' इत्युत्तरं भवति। सारसस्य स्त्री लक्ष्मणा शब्देनोच्यते। "हंसस्य योषिद् वरटा सारसस्य तु लक्ष्मणा" इत्यमरात्। २—'**कासारसहिता**' कासारेण सरोवरेण सहिता वनाली ग्रीष्मे गजानां हिता भवति। यद्यपि 'पृष्टप्रश्नस्य प्रथमप्रश्नेनैव गतार्थत्वाद् द्वितीयस्य प्रश्नस्य प्रश्नविषयकप्रश्नत्वाभावादुपन्यासोऽसङ्गतः, तथापि केवलपृष्टप्रश्नोत्तरस्याविदग्धेनाप्यूहनात् प्रश्नान्तरमप्युपन्यस्तम्। यथात्रैव प्रथमप्रश्नस्य 'का सारसस्य योषिद् ?' इत्युत्तरं सर्वैरपि कल्पयितुं शक्यते। द्वितीयप्रश्नोपन्यासे तु 'कासारसहिता' इत्युत्तरं कश्चिदेव विदग्धः ऊहितुं प्रगल्भते।

अस्यैव द्वितीयं यथा—

**चादय इति यत्र स्यादुत्तरमथ तत्र कीदृशः प्रश्नः।**
**कथय त्वरितं के स्युर्नौकाया वाहनोपायाः॥ १८॥**

**चादय इति**, पूर्वार्धं स्पष्टम्। १—नौकाया वाहनस्य चालनस्य उपाया अरित्रादयः के कीदृशा भवन्ति ? इति त्वरितं कथय।

अत्रोत्तरम्—**के निपाताः**। १—के निपाताः निपातसंज्ञा भवन्तीतिप्रश्नस्यैव 'चादयः' इत्युत्तरम्। 'चादयोऽसत्त्वे' इत्यनेन चादीनां निपातत्वम्। नौकावाहनोपायाश्च 'केनिपाताः' निपतन्तीति निपाताः, 'ज्वलितिकसन्तेभ्यो णः' इति पततेर्णप्रत्ययः, के जले निपाता इति केनिपाताः। 'तत्पुरुषे कृति बहुलम्' इति सप्तम्या अलुक्।

इति पृष्टप्रश्नजातिः।

भग्नोत्तरजातिं निरूपयति,

**कथयामकमित्यादि भङ्क्त्वा यत्रोत्तरं भवेत्।**
**भग्नोत्तरं तदिच्छन्ति काकुमात्रेण गोपितम्॥ १९॥**

**कथयेति**, यत्र अमुकं कथय, इत्यादि प्रश्नवाक्यं भङ्क्त्वा खण्डयित्वा तदन्तर्गतं काकुमात्रेण विकृतध्वनिमात्रेण गोपितम् अप्रकाश्यतामुपनीतमुत्तरं कल्पितं भवेत्, तत् पृष्टं भग्नोत्तरम्, इति नाम्ना व्यवहर्तुमिच्छन्ति प्रश्नविदः। भग्नं प्रश्नखण्डमेवोत्तरं यत्र तद् भग्नोत्तरम् इति तत्त्वम्।

उदाहरणं यथा—

**भवत इवातिस्वच्छं कस्याभ्यन्तरमगाधमतिशिशिरम्।**

**काव्यामृतरसमग्नस्त्वमिव सदा कः कथय सरसः ॥ २०॥**

**भवतेति,** १--भवत इव कस्य अभ्यन्तरम् अन्तर्भागः (पक्षे अन्तःकरणम्) अतिस्वच्छम् अतिनिर्मलम्, अगाधम् अतिगभीरम्, अतिशिशिरम् अतिशीतलम् (पक्षे कामक्रोधादिराहित्येनातिशान्तम्) चास्ति ? । २---त्वमिव त्वत्तुल्यः, सदा काव्यमेवामृतं सुधा, तद्रसे आस्वादे मग्नः क इति कथय ? ।

अस्योत्तरम्—**सरसः** । सरसः तडागस्यैव भवतइवाभ्यन्तरम् अतिस्वच्छत्वादियुक्तम् । २—'सरसः' रसेन शृङ्गारादिरसवासनया सह वर्तमानः पुरुषः, सदा काव्यामृतरसमग्नो भवति । अत्र 'सरसः' इत्युत्तरम् उत्तरार्धप्रश्नवाक्यं भङ्क्त्वैव लभ्यते ।

द्वितीयोदाहरणं यथा–

**वीरे सरुषि रिपूणां नियतं का हृदयशायिनी भवति ।**
**नभसि प्रस्थितजलदे का राजति हन्त वद तारा ॥ २१॥**

**वीर इति,** १–वीरे पुरुषे, सरुषि क्रोधवति सति, नियतम् अवश्यम्, रिपूणां हृदयशायिनी हृदयेषु निखाता का भवति ? २—प्रस्थिता विनिर्गताः, जलदाः मेघाः यस्मात्, तथाभूते नभसि आकाशे, का राजति इति वद ?

अत्र प्रथमप्रश्नोत्तरम् **'आरा'** इति । 'आरा चर्मप्रभेदिका' इत्यमरः । यथा आरा चर्म भिनत्ति, तथैव वीरपुरुषे सक्रोधे सति तच्छत्रूणां हृदयं त्रासरूपा आरा भिनत्ति । त्रासे सादृश्यादाराशब्दप्रयोगः । द्वितीयप्रश्नोत्तरम् **'तारा'** इति, नक्षत्रमित्यर्थः । उभयत्राप्युत्तरोद्भावने वाक्यभङ्गःक्रियते ।

इति भग्नोत्तरजातिः ।

आदिमध्यान्तसंज्ञितं पृष्टं लक्षयति—

**यत् पृष्टं प्रश्नवाक्ये स्यादादिमध्यान्तगोपितम् ।**
**उत्तरं तत्त्रिधा प्रोक्तमादिमध्यान्तसंज्ञितम् ॥ २२॥**

**यदिति,** यत् पृष्टं पृच्छ्यमानमुत्तरं प्रश्नवाक्ये एव आदौ मध्ये अन्ते च गोपितं भवेत्, तत् क्रमेण, आद्युत्तरम्, मध्योत्तरम्, अन्तोतरं चेत्येवं त्रिधा त्रिप्रकारकं प्रोक्तम् ।

अथ क्रमेणोदाहरति—

**भ्रमरहितः कीदृक्षो भवतितरां विकसितः पद्मः।**
**ज्यौतिषिकः कीदृक्षः प्रायो भुवि पूज्यते लोकैः ॥२३॥**

**भ्रमेति,** १–विकसितः पद्मः कीदृक्षः कीदृशो भवतितराम्, अतिशयेन भवति ? २—कीदृक्षो ज्यौतिषिको ज्योतिःशास्त्रपण्डितः प्रायः आधिक्येन भुवि लोकैः पूज्यते ?

अत्रोभयोरपि प्रश्नयोरुत्तरम्–**भ्रमरहितः**। तत्र प्रथमप्रश्नोत्तरजिज्ञासायां भ्रमराणां हितः, इति विग्रहीतव्यम्। द्वितीये तु भ्रमेण मिथ्याज्ञानेन रहित इत्येवमर्थः करणीयः। आद्युत्तरामिदम्, प्रश्नवाक्यादौ 'भ्रमरहितः' इत्युत्तरस्य भ्रमेण कम्पेन रहितः इत्येवमर्थान्तरपरतया न्यासेन गोपितत्वात्।

अस्यैव द्वितीयमुदाहरणं यथा—

**प्रभवः को गङ्गाया नगपतिरातिसुभगश्रृङ्गधरः।**
**के सेव्यन्ते सेवकसार्थैरत्यर्थमर्थरतैः ॥ २४ ॥**

**प्रभव इति,** १–प्रकृष्टो भव उत्पत्तिर्यस्य तादृशः, अतिसुभगानां निरतिशयमनोहराणां श्रृङ्गाणां शिखराणां धरः धारकः, नगानां पर्वतानां पतिर्हिमालयः, गङ्गायाः कः ? २-अत्यर्थम्, अर्थरतैर्धनलोलुपैः, सेवकानां सार्थैः समुदायैः, के सेव्यन्ते ?

अत्रोत्तरं '**प्रभवः**'। १–नगपतिर्गङ्गायाः प्रभव उत्पत्तिस्थानम्। २–सेवकसार्थैः 'प्रभवः' स्वामिनः सेव्यन्ते, अत्रापि पूर्ववत् 'प्रभवः' इत्युत्तरं वाक्यादौ श्लेषेण गोपितम्।

इत्याद्युत्तरजातिः।

यत्र प्रश्नवाक्यमध्ये उत्तरं भवेत् तन्मध्योत्तरं पृष्टं तदुदाहरणं यथा—

**अयमुदितो हिमरश्मिर्वनितावदनस्य कीदृशः सदृशः।**
**नीलादिकोपलम्भः स्फुरति प्रत्यक्षतः कस्य ॥२५॥**

---

१—ज्योतिषि कः कीदृक्षः ? इति क्वचिदुपलभ्यमानः पाठस्त्वपपाठः प्रतीयते, तथा सति विशेष्यविशेषणविषयकप्रश्नद्वयप्रतीतावुत्तरद्वयप्रसङ्गात्, उत्तरं त्वेकमेव लभ्यते 'भ्रमरहितः' इति।

**अयमिति,** १—उदितः अयं पुरो दृश्यमानः, हिमरश्मिश्चन्द्रमाः, वनितावदनस्य कीदृशः ? २—नीलादिकोपलम्भो नीलपीतादिविज्ञानं कस्य पुरुषस्य, प्रत्यक्षतः प्रत्यक्षेण प्रमाणेन, स्फुरति प्रकाशते ?

अस्योत्तरम्—**सदृशः** । १–हिमरश्मिर्वनितावदनस्य सदृशस्तुल्य इत्यर्थः; समान इव दृश्यत इति विग्रहः, २—नीलादिकोपलम्भश्च सदृशः, नेत्रसहितस्य जनस्य प्रत्यक्षतः स्फुरति । अत्र च 'सदृशः' इत्युत्तरं प्रश्नवाक्यद्वयमध्ये गोपितम्।

अस्यैव द्वितीयमुदाहरणं यथा—

**गैरिकमनःशिलादिः प्रायेणोत्पद्यते कुतो नगतः ।**
**यः खलु न चलति पुरुषः स्थानादुक्तः स कीदृक्षः ॥२६॥**

**गैरिकेति,** १—गैरिकं रक्तधातुविशेषः, मनःशिला 'मैनसिल' इति लोके प्रसिद्धा, ते आदी यस्य स पदार्थः कुत उत्पद्यते ? २—यः पुरुषः स्थानात् स्वासनात्, न चलति, स कीदृक्ष उक्तः ?

उभयोरुत्तरम्—**नगतः** । १—नगतः[२] नगेभ्यः पर्वतेभ्यः प्रायेण गैरिकादयो धातव उत्पद्यन्ते । २—यः पुरुषः स्वस्थानान्न चलति, स 'न गतः' इत्युच्यते, न गतवानित्यर्थः । न गतं गमनं यस्य सः 'नगतः' इति वा समस्तमेवोत्तरं कल्प्यम्, नशब्देनायं समासो न तु नञा, अतो नलोपशङ्का न कार्या । अत्रापि 'नगतः' इत्युत्तरं प्रश्नवाक्यद्वयमध्ये स्थापितम् ।

इति मध्योत्तरजातिः ।

यत्र प्रश्नवाक्यान्त उत्तरं भवेत् तदन्तोत्तरं ध्रुवम्, तद् यथा—

**कस्मिन् वसन्ति वद मीनगणा विकल्पं-**
**किं वा पदं वदति, किं कुरुते विवस्वान् ।**
**विद्युल्लतावलयवान् पथिकाङ्गनाना**
**मुद्वेजको भवति कः खलु वारिवाहः ॥ २७ ॥**

**कस्मिन्निति,** १—मीनगणाः कस्मिन् वसन्ति इति वद, २—किं

---

१–दृग्दृशवतुषु इति समानस्य सः ।

२–पञ्चम्यास्तासिल् ।

।विकल्पं विकल्पार्थं वदति ? ३—विवस्वान् सूर्यः किं कुरुते ? ४—विद्युतो लता इव विद्युल्लताः, तासां वलयं समूहोऽस्यास्तीति तद्वान् कः पदार्थः खलु पथिकाङ्गनानाम् उद्वेजक उद्दीपकत्वाद् दुःखदः ?

अस्योत्तरं **वारिवाहः**। १—मीनगणाः 'वारि' जले वसन्ति । २—'वा' इति पदं विकल्पबोधकम् । ३—विवस्वान् 'अहः' दिनं करोति । ४—विद्युल्लतावलयवान् 'वारिवाहः' मेघः पथिकाङ्गना उद्वेजयति, कामोद्दीपकत्वात् । अत्र 'वारिवाहः' इत्युत्तरं प्रश्नवाक्यान्ते निवेशितम्,

**शब्दः प्रभूगत इति प्रचुराभिधायी**
**कीदृग् भवेत् वदत शब्दविदो विचिन्त्य ।**
**कीदृग् वृहस्पतिमते विदिताभियोगः**
**प्रायः पुमान् भवति नास्तिकवर्गमध्यः ॥ २८ ॥**

**शब्द इति,** १—प्रभूगत इति शब्दः कीदृक् किंविधःसन् प्रचुराभिधायी प्रचुरार्थवाचको भवति ? २—हे शब्दविदः कोशादिज्ञानेन शब्दपण्डिताः ! यूयं विचिन्त्य वदत यद् वृहस्पतिमते प्रत्यक्षैकप्रमाणवादिचार्वाकसिद्धान्ते विदितः प्रसिद्धः, अभियोगः अभितो योगः सम्बन्धो यस्य स चार्वाकमतानुयायितया प्रसिद्ध इत्यर्थः, पुमान् प्रायः कीदृग् भवति ? ।

अत्राप्युभयोः प्रश्नयोः सर्वपादान्ते निवेशितं **'नास्तिकवर्गमध्यः'** इत्युत्तरम्। १—नास्ति कवर्गस्य मध्यो मध्यमो वर्णो गकारो यत्र तादृशः 'प्रभूगतः' शब्दः प्रचुरवाचको भवति । प्रभूगतशब्दाद् गकारे निस्सारिते प्रभूत इत्यवशिष्यते, स च प्रचुरार्थकः, प्रभूतं प्रचुरं प्राज्यमितिकोशात् । २—चार्वाकमतानुयायी च पुमान् प्रायो 'नास्तिकवर्गस्य नास्तिकसमूहस्य मध्यः मध्यवर्ती' भवति । नास्ति परलोक इति मतिर्येषां ते नास्तिकाः ।

इत्यन्तोत्तरजातिः ।

अथ कथितापन्हुतिं लक्षयति—

**पदान्तराभिसम्बन्धात् प्रश्नवाक्येऽपि संस्थितम् ।**

---

१—'दि' इतिक्वचित् पाठः

**कथितापन्हुतिः सा स्याल्लक्ष्यते यत्र नोत्तरम् ॥ २९ ॥**

**पदेति,** यत्र प्रश्नवाक्ये संस्थितं विद्यमानमप्युत्तरं पदान्तराभिसम्बन्धात् अन्यैः पदैः सह संमिश्रणात्, न लक्ष्यते न प्रतीयते, सा कथितापन्हुतिर्नाम प्रश्नजातिः स्यात्। कथितस्यापन्हुतिरपलापो यत्रेति योगार्थः।

तदुदाहरणं यथा—

**पृथ्वीसंवोधनं कीदृक् कविना परिकीर्तितम्।**
**केनेदं मोहितं विश्वं प्रायः केनाप्यते यशः ॥ ३० ॥**

**पृथ्वीति** १—कविना पृथ्वीसंवोधनं कीदृक् परिकीर्तितम् ? २—इदं विश्वं जगत् केन मोहितम् ? ३—प्रायः केन पुरुषेण यश आप्यते ?।

अत्र प्रश्नवाक्य एव विद्यमानं **'कविना'** इतिपदं प्रश्नात्रितयस्याप्युत्तरम्। तत्र पूर्वप्रश्नोत्तरद्वयन्तु 'को' 'इना' इत्येवम् अयादेशेन जातं सन्धि विच्छिद्य प्रतीयते, तृतीयोत्तरं तु 'कविना' इति समुदायरूपमेव। किं चेदमुत्तरं परिकीर्तितमिति क्रियापदेनाभिसम्बन्धान्न स्पष्टमुत्तरत्वेन प्रतीयते। १—कुरिति पृथ्वीनाम, तत् सम्बोधने 'को' इति। २—इदं विश्वम् 'इना' कामेन मोहितम्। 'इः' इति कामनाम, 'इः' कामो मदनो मारः, इतितारााभिधानकोशात्। ३—'कविना' काव्यकर्त्रा यश आप्यते।

द्वितीयमुदाहरणं यथा—

**कस्य मरौ दुरधिगमः ? कमले कः कथय विरचितावासः।**
**कैस्तुष्यति चामुण्डा ? रिपवस्ते वद कुतो भ्रष्टाः ? ॥ ३१ ॥**

**कस्येति,** १—मरौ मरुस्थले कस्य वस्तुनो दुरधिगमो दुःखेन प्राप्तिः ? २—कमले विरचित आवासो निवासस्थानं येन स क इति कथय, ३—चामुण्डा कैः पदार्थैस्तुष्यति ? ४—ते रिपवः कुतो भ्रष्टाः ? इति वद।

अत्र प्रश्नचतुष्टयस्याप्युत्तराणि तत्तत्प्रश्नवाक्यघटकानि 'कस्य' 'कः' 'कैः' 'कुतः' इति पदान्येव। तथाहि, १—मरौ 'कस्य' जलस्य दुरधिगमः। २—कमले 'कः' प्रजापतिर्विरचितावासः। ३—चामुण्डा 'कैः' शीर्षैस्तुष्यति। ४—रिपवः 'कुतः' पृथिव्या भ्रष्टाः पृथिव्यधिकाराद् हीना जाता इति भावः। अत्रापि पूर्ववत् कस्येत्याद्युत्तरपदानां कर्मत्वेन कर्तृत्वेन करणत्वेनापादानत्वेन च पदान्तराभिसम्बन्धा-

दुत्तरत्वेनाप्रतीतिः ।

इति कथितापह्नुतिः ।

एकेन विषमं वृत्तनामकं च पृष्टभेदं लक्षयति—

**यत्र भङ्गस्य वैषम्यं विषमं तन्निगद्यते ।**
**वृत्तनामोत्तरं पृष्टं भवेत्तद् वृत्तनामकम् ॥ ३२ ॥**

**यत्रेति,** यत्रोत्तरे भङ्गस्य रचनायाः पदच्छेदस्य वा वैषम्यं क्लिष्टकल्पना तद् अन्वर्थं विषमं नाम पृष्टम् । यच्च पुनः वृत्तनामोत्तरं वृत्तस्य छन्दसः, नाम उत्तरं यस्य तादृशं पृष्टं प्रश्नो भवेत्, तद् वृत्तनामकं पृष्टमाहुः ।

क्रमश उदाहरणं यथा—

**कीदृग् वनं स्यान्न भयाय पृष्टे यदुत्तरं तस्य च कीदृशस्य ।**
**वाच्यं भवेदीक्षणजातमम्बु कं चाधिशेते गवि कोऽर्चनीयः ॥३३॥**

**कीदृगिति,** १,२—कीदृग् वनं भयाय न स्यादिति पृष्टे प्रश्ने सति यदुत्तरं तस्योत्तरस्य कीदृशस्य सतः ईक्षणजातम् ईक्षणं नेत्रं तज्जातमम्बु जलं वाच्यं भवेत् ? ३—कः अर्चनीयः पूजनीयः, गवि[1] जले कम् अधिशेते अधिशय्य तिष्ठति !?

अस्योत्तरम्—**अहिंस्रमहिमः**। तथाहि १,२—'अहिंस्रम्' हिंस्रा व्याघ्रादयस्तद्रहितं वनं भयाय न भवति । किंच 'अहिंस्रम्' इत्युत्तरस्य 'अहिमः' सतो नेत्राम्बुवाचकत्वं भवति, अविद्यमानः 'हिम्' इति शब्दो यस्मिन् सः अहिम्, तस्य अहिमः, 'अहिंस्रम्' इतिशब्दाद् यदि 'हिम्' इति शब्दो निस्सार्यते, तर्हि 'अस्रम्' इत्येव शिष्यते, तच्च नेत्राम्बुवाचकं भवति। तृतीयोत्तरे तु 'अहिंस्रम्--अहिम्--अः' इति पदच्छेदः, अर्चनीयः 'अः' वासुदेवो विष्णुः 'अहिंस्रम्' अहिंसकम् 'अहिम्' शेषनागम्' अधिशेते ।

अस्यैव द्वितीयमुदाहरणं यथा—

**प्रायः कार्ये न मुह्यन्ति नराः सर्वत्र कीदृशाः ।**
**नौघेत्ययं भवेच्छब्दो नौवाची वद कीदृशः ॥३४॥**

---

१—'स्वर्गेषु पशुवाग्वज्रदिङ्नेत्रघृणिभूजले लक्ष्यदृष्ट्या स्त्रियां पुंसि गौः' इत्यमरः ।
२—'नाधा इति भवेत्' इति क्वचित् पाठः ।

**प्राय इति,** १—कीदृशा नराः प्रायः सर्वत्र कार्ये न मुह्यन्ति न प्रमाद्यन्ति ? २—'नाधा' इत्ययं शब्दः कीदृशः सन् नौवाची नौकावाचको भवेत् इति वद ।

अत्रोत्तरम्—**सावधानाः ।** १—अवधानम् अप्रमादः, तेन सहिताः सावधाना अप्रमादिनो नरा कार्ये न मुह्यन्ति । २—'सावधानाः' नाधाशब्दो नौकावाची भवति ।

तथाहि—सावधाना इति शब्दे 'सौ' 'अधाः' 'अनाः' इति त्रयाणां शब्दानां कर्मधारयः । औकारेण सह वर्तते इति 'सौः', अविद्यमानो धा 'धा' इति वर्णो यत्र सः 'अधाः', सौश्चासावधाश्च 'सावधाः', औकारसहितो धावर्णरहितश्चेत्यर्थः, न 'आः' यत्र स अनाः' आकाररहित इत्यर्थः, सावधाश्चासावनाश्च 'सावधानाः' एतादृशो नाधाशब्दो नौकावाची भवति, अयं स्पष्टो भावः-यदि 'नाधा' शब्दाद् धाकारो निस्सार्यते, नाशब्दस्याकारं निस्सार्य औकारान्तः क्रियते तदा नावितिशब्दो नौकावाचको निष्पद्यते ।

इति विषमजातिः ।

वृत्तनामकोदाहरणं यथा—

> **गतक्लेशायासा विमलमनसः कुत्र मुनय-**
> **स्तपस्यन्ति स्वस्थाः सुररिपुरिपोः का च दयिता ।**
> **कविप्रेयः किं स्यान्नवलघुयुतैरष्टगुरुभि-**
> **र्बुधा वृत्तं वर्णैः स्फुटघटितबन्धं कथयत ॥३५॥**

**गतेति,** १—गतो विनष्टः, क्लेशा अविद्यास्मितादयो योगशास्त्रप्रसिद्धाः, त एव आयासो येषां तादृशाः, अत एव विमलं मनोऽन्तःकरणं येषां तथाभूताः स्वस्थाः स्वस्मिन्नात्मनि तिष्ठन्तीति स्वस्था आत्मारामा मुनयः, क्व तपस्यन्ति ? २—सुररिपवो दैत्याः, तेषां रिपोर्नारायणस्य दयिता पत्नी च का ? ३—हे बुधाः ! नवभिर्लघुभिरेकमात्रिकैरक्षरैर्युतैः, अष्टभिरष्टसंख्याकैः, गुरुभिर्द्विमात्रिकैर्वर्णैः रक्षरैः, स्फुटं घटितो रचितो बन्धः पदविन्यासो यस्मिन्, तादृशं कवीनां प्रेयः प्रियतरं वृत्तं किम् ? इति यूयं कथयत ।

अत्रोत्तरम्—**शिखरिणी ।** १—मुनयः 'शिखरिणि' पर्वते तपस्यन्ति

शिखरं शृङ्गमुच्यते, तद्वान् पर्वतः । २—'ई' लक्ष्मीर्नारायणस्य दयिता । ३—नवलघुभिरष्टगुरुभिश्च युतं छन्दः 'शिखरिणी' इति व्यपदिश्यते । तदुक्तं वृत्तरत्नाकरे—'रसै रुद्रैश्छिन्ना यमनसभला गः शिखरिणी' ।

अस्यैवापरमुदाहरणं यथा—

**उरसि मुरभिदः का गाढमालिङ्गितास्ते**
**सरसिजमकरन्दामोदिता नन्दने का ।**
**गिरिसमलघुवर्णैरर्णवाख्याति (?) संख्यै-**
**र्गुरुभिरपि कृता का छन्दसां वृत्तिरग्र्या ॥३६॥**

**उरसीति,** १—मुरभिदो नारायणस्य, उरसि वक्षसि, गाढं दृढम्, आलिङ्गिता आश्लिष्टा, का आस्ते ? । २—नन्दने तदाख्ये देववने, सरसिजानां मकरन्दैः पुष्परसैः, आमोदिता हृष्टा का ? ३—गिरिसमलघुवर्णैः—गिरयः अष्टौ, तत्समसंख्यैः अष्टभिरित्यर्थः, लघुवर्णैः, अर्णवाख्यातिसंख्यैः—अर्णवाः सप्त, तत् समसंख्याकैः सप्तभिर्गुरुभिरपि कृता रचिता छन्दसां मध्ये, अग्र्या उत्तमा, वृत्तिः वृत्तम्, का ? ।

अस्योत्तरम्—**मालिनी** । १—'मा' लक्ष्मीर्विष्णोरुरसि गाढमालिङ्गिता तिष्ठति । २—नन्दनवने 'अलिनी' भ्रमरी मकरन्दमोदिता भवति । ३—अष्टभिर्लघुभिः सप्तभिर्गुरुभिश्च युतमुत्तमं छन्दः 'मालिनी' । तदुक्तं 'ननमयययुतेयं मालिनी भोगिलोकैः' ।

इति वृत्तनामकजातिः ।

नामाख्यातं लक्षयति—

**एकमेवोत्तरं यत्र सुश्लिष्टत्वाद् द्विधा भवेत् ।**
**सुप्तिङन्तप्रभेदेन नामाख्यातं तदुच्यते ॥३७॥**

**एकेति,** यत्र प्रश्ने एकमेव उत्तरं सुश्लिष्टत्वाद् शोभनश्लेषयुक्तत्वात्, श्लेषस्य शोभनत्वं सुबोधतया सहृदयहृदयावर्जकतया वा विज्ञेयम्, सुप्तिङन्तप्रभेदेन सुबन्ततया, तिङन्ततया च द्विधा व्यवतिष्ठते, तत् नाम च आख्यातं च नामाख्यातम् इति नाम्ना उच्यते । आख्यातं तिङन्तम् । एकस्यैवोत्तरस्य यत्र प्रश्नभेदेन सुबन्तत्वं तिङन्तत्वं च भवति तन्नामाख्यातमिति स्पष्टोऽर्थः ।

तदुदाहरणं लटि यथा—

**समरशिरसि सैन्यं कीदृशं दुर्निवारं-**
**विगतघननिशीथे कीदृशे व्योम्नि शोभा ।**
**कमपि विधिवशेन प्राप्य योग्याभिमानम् ।**
**जगदखिलमनिन्द्यं दुर्जनः किं करोति ॥ ३८ ॥**

**समरशिरसीति,** १-समरशिरसि संग्रामभूमौ कीदृशं सैन्यं दुर्निवारं दुःखेन वारयितुं शक्यम् ? २-विगता घना मेघा यस्मात् तादृशे निशीथे मध्यरात्रे कीदृशे व्योम्नि आकाशे शोभा भवति ? ३-दुर्जनः खलः विधिवशेन दैवाद् योग्याभिमानं योग्यस्य योग्यपुरुषस्य अभिमानम् अभिमानास्पदं योग्यपुरुषाभिमान-स्थानमित्यर्थः, प्राप्य अनिन्द्यमखिलं जगत् किं करोति ?

अस्योत्तरम्—**अभिभवति** । १-'अभि' न भीर्भयं यस्य तदभि निर्भयं सैन्यं दुर्निवारं भवति । २-निशीथे 'भवति' भानि नक्षत्राणि विद्यन्ते यस्मिंस्तद् भवत्, तस्मिन् नक्षत्रमण्डिते व्योम्नि शोभा भवति । ३-दुर्जनो योग्येति स्थानं प्राप्य जगद् अभिभवति, आक्रामति दुःखयतीत्यर्थः । अत्रैकोत्तरं प्रश्नभेदात् सुबन्तं तिङन्तं च स्वीक्रियते । इदं लटः प्रथमपुरुषैकवचनोदाहरणम् ।

बहुवचनोदाहरणं यथा—

**पदमनन्तरवाचि किमिष्यते**
**कपिपतिर्विजयी ननु कीदृशः ।**
**परगुणान् गदितुं गतमत्सराः**
**कुरुथ किं सततं भुवि सज्जनाः ॥ ३९ ॥**

**पदमिति,** १—अनन्तरवाचि अनन्तरार्थप्रतिपादकं पदं किम् इष्यते ? २-कीदृशः कपिपतिः सुग्रीवः विजयी जात इतिशेषः ? ३-गतो मत्सरोऽन्यशुभद्वेषो येषां तादृशा हे सज्जनाः ! यूयं भुवि परगुणान् गदितुं सततं किं कुरुथ ?

अस्योत्तरम्-**अनुसरामः** । १-अनन्तरार्थवाचकम् 'अनु' इति पदम् । २-'सरामः' भगवद्रामचन्द्रसहितो वानरराजः सुग्रीवो वालिनिहननपूर्वं

किष्किन्धाराज्यप्राप्तौ विजयी बभूव। तृतीयप्रश्नोत्तरे सज्जनाः प्रतिब्रुवन्ति 'अनुसरामः' परगुणानामनुसरणं कुर्म इत्यर्थः।

लिटमुदाहरति,

**वदति राममुष्य जघन्यजो वसति कुत्र सदालसमानसः।**
**अपि च शक्रसुतेन तिरस्कृतो रविसुतः किमसौ विदधे त्वया॥४०॥**

**वदतीति,** १—अमुष्य रामस्य, जघन्यजः कनिष्ठभ्राता लक्ष्मणः, रामं वदति पृच्छतीत्यर्थः, किं पृच्छतीत्यत आह वसतीति, अलसम् आलस्ययुक्तं मानसं यस्य स पुरुषः, सदा कुत्र स्थाने वसति ? २—अपि च हे भ्रातः शक्रसुतेन इन्द्रपुत्रेण वालिना तिरस्कृतः असौ रविसुतः सूर्यपुत्रः सुग्रीवः त्वया किं विदधे किं चक्रे, किमिति सामान्ये नपुंसकम् ।

अस्योत्तरम् **अनुजगृहे**। प्रथमप्रश्नोत्तरे 'अनुज ! गृहे' इति पदच्छेदः। लक्ष्मणेन अलसजनस्य निवासस्थानं पृष्टो रामचन्द्रः प्रत्याह हे 'अनुज'! हे कनिष्ठभ्रातः, 'गृहे' वसतीति शेषः। द्वितीयप्रश्नोत्तरे स एव आह, मया रविसुतः 'अनुजगृहे' अनुगृहीतः, ग्रहेः कर्मणि लिट्। प्रथमपुरुषैकवचनम्, लिटो बहुवचनमुदाहरति—

**भवति गमनयोग्या कीदृशी भू रथानां-**
**किमतिमधुरमम्लं भोजनान्ते प्रदेयम्।**
**प्रियतम वद नीचामन्त्रणे किं पदं स्यात्**
**कुमतिकृतविवादाश्चक्रिरे किं समर्थैः॥ ४१॥**

**भवतीति,** १—रथानां गमनयोग्या भूः कीदृशी भवति ? २—भोजनान्ते अतिमधुरम्, अम्लं च किं वस्तु प्रदेयम् ? ३—हे प्रियतम ! नीचामन्त्रणे निकृष्टजनसम्बोधने किं पदं स्यात् ? ४—समर्थैः सामर्थ्ययुक्तैः, सामर्थ्यं च शारीरं बुद्धिसम्बन्धि चेत्युभयमपि ग्राह्यम्, कुमतिभिर्मूर्खैः कृता विवादाः कलहा विरुद्धवादा वा किं चक्रिरे ?

अस्योत्तरं **समादधिरे**। १—'समा' समतला भूमी रथगमनयोग्या भवति। २—भोजनान्ते 'दधि' प्रदेयम्। ३—'रे' इति नीचजनसम्बोधनपदम्। ४—मूर्खाणां विवादाः समर्थैः 'समादधिरे' समाहिताः।

लुटमुदाहरति,

**वदतानुत्तमवचनं ध्वनिरुच्चैरुच्यते च कीदृक्तः ।**
**तव सुहृदो गुणनिवहै रिपुनिवहं किं नु कर्तारः ॥४२॥**

**वदतेति,** १–उच्यतेऽनेनेति वचनम्; अनुत्तमवचनं नीचार्थबोधकं पदं वदत, २–कीदृक्तः ध्वनिः, उच्चैरुच्चस्वरेण, उच्येत उच्चार्यते ? ३–तव सुहृदो गुणनिवहैर्गुणसमूहैः, रिपुनिवहं शत्रुसमूहं किं नु कर्तारः ? 'नु' इति वितर्के ।

अस्योत्तरम् **अवमन्तारः** । १–'अवमम्' नीचार्थवाचकम् । २–' तारः' ध्वनिरुच्चैरुच्चार्यते । ३–तव सुहृदः शत्रुनिवहम् 'अवमन्तारः' तिरस्कर्तारः । कर्तरि लुट् । प्रथमपुरुषबहुवचनम् ।

लुटो मध्यमपुरुषमुदाहरति,

**कीदृक् तोयं दुस्तरं स्यात् तितीर्षोः**
**का पूज्यास्मिन् खड्गमामन्त्रयस्व ।**
**दृष्ट्वा धूमं दूरतो मानविज्ञाः**
**किं कर्तास्मि प्रातरेवाश्रयाशम् ॥ ४३ ॥**

**कीदृगिति,** १–तितीर्षोः कीदृक् तोयं दुस्तरं स्यात् ? २–अस्मिन् संसारे का पूज्या ? ३–खड्गम् आमन्त्रयस्व, ४–हे मानविज्ञाः ! प्रमाणकुशलाः ! अहं प्रातरेव दूरतो धूमं दृष्ट्वा आश्रयम् अश्नातीत्याश्रयाशो[1] वन्हिः, तम्, किं कर्तास्मि ? किमिति सर्वत्र सामान्ये नपुंसकं बोध्यम् ।

अत्रोत्तरम् **अनुमातासे** । १–न नौर्यत्र तद् ' अनु ' नौकारहितं तोयं दुस्तरम् । ' ह्रस्वो नपुंसके प्रातिपदिकस्य ' इति ह्रस्वः । २–'माता' जननी पूज्या । ३–'असे' इति खड्गवाचकासिशब्दस्यामन्त्रणे रूपम् । ४–धूमं दृष्ट्वा त्वं वन्हिम् ' अनुमातासे ' अनुमास्यसि । ' माङ माने शब्दे च ' लुटि मध्यमैकवचने रूपम् ।

---

१–'आश्रयाशो बृहद्भानुः' इत्यमरः ।

लृटमुदाहरति,

**कामुकाः स्युः कया नीचाः ? सर्वः कस्मिन् प्रमोदते ? ।**
**अर्थिनः प्राप्य पुण्याहें करिष्यध्वे वसूनि किम् ? ॥४४॥**

**कामुका इति,** १—कामुकाः कामिनः, कया स्त्रिया हेतुना नीचाः पतिताः स्युः ? २—सर्वः पुरुषः कस्मिन् वस्तुनि प्रमोदते ? ३—पुण्याहे पवित्रदिने अर्थिनो याचकान् प्राप्य वसूनि धनानि किं करिष्यध्वे ?

अत्रोत्तरम्—**दास्यामहे** । १—'दास्या' भृतिक्रीतया स्त्रिया ( संमुक्तया ) कामुका नीचा भवन्ति । २—सर्वोऽपि जनः '१महे' उत्सवे प्रमोदते । ३—पुण्ये दिने वसूनि याचकेभ्यो 'दास्यामहे' । दाधातोर्लृटि उत्तमपुरुष-बहुवचनम् ।

लृटः प्रथमपुरुषमुदाहरति—

**को दुःखी सर्वकार्येषु किंभृशार्थस्य वाचकम् ।**
**यो यत्र विरतो नित्यं ततः किं स करिष्यति ? ॥ ४५ ॥**

**को दुःखीति,** पूर्वार्धं स्पष्टम् । ३—यः पुरुषो यत्र स्थाने विरतो विरक्तः यत्-स्थानविषयकवैराग्यवान् इत्यर्थः । स पुरुषः ततः तस्मात् स्थानात् किं करिष्यति ?

अत्रोत्तरम्—**प्रयास्यति** । १—प्रयासः परिश्रमोऽस्यास्तीति 'प्रयासी' सर्वकार्येषु दुःखी भवति । २—'अति' इति पदं भृशार्थवाचकम् । ३—यस्मिन्स्थाने यस्य विरक्तिः, ततः स **'प्रयास्यति'** निर्गमिष्यति ।

लोटमुदाहरति,

**विद्यन्त इति समानार्थः शब्दः कोऽचिरयति मुद्रां किम् ।**
**कथमपि यदि कोपः स्यात्तं सुजनः किं करोतु वद ॥ ४६ ॥**

**विद्येति,** १—'विद्यन्ते' इत्येतच्छब्दसमानार्थः शब्दः कः ? २—किं वस्तु मुद्रां मुद्रिकामणिं राजादिनामचिन्हं वा, अचिरयति चिरकालं नावस्थापयति ? ३—यदि कथमपि कोपः स्यात्, तदा तं सुजनः किं करोतु ?

अत्रोत्तरम्—**सन्त्यजतु** । १—विद्यन्ते इतिशब्दसमानार्थः शब्दः 'सन्ति'

---

१—'मह उद्धव उत्सव' इत्यमरः ।

इति। 'अस्' 'भू' 'विद्' इमे धातवस्तुल्यार्थाः। २—'अजतु' जतु लाक्षा प्रोच्यते, न जतु 'अजतु' लाक्षाव्यतिरिक्तं वस्तु मुद्रामर्पणे न चिरकालमवस्थापयति, लाक्षातिरिक्तसंश्लेषस्यादृढत्वात्। अथवा मुद्रेति राजादिनामाङ्कितं 'मोहर' इति लोके प्रसिद्धं चिह्नमुच्यते। तच्चिह्नं द्रवीकृत्य कर्गलोपरि श्लेषिताया लाक्षाया उपरि दीयमानं चिरमवतिष्ठते, नान्यस्योपरि। ३—यदि कोपो जातस्तं सुजनः सन्त्यजतु। कर्माणि लोट्मुदाहरति—

**मेघात्यये भवति का सुभगावगाहा**
**वृत्तं वसन्ततिलकं कियदक्षराणाम्।**
**भो भोः कदर्यपुरुषा विषुवद्दिनं च,**
**वित्तं च वः सुबहु तत् क्रियतां किमेतत्॥४७॥**

**मेघात्यय इति,** १–मेघात्यये शरदि, सुभगः सुखकरः, अवगाहः स्नानं यस्यां तादृशी का भवति? २–वसन्ततिलकं नाम वृत्तं छन्दः कियतामक्षराणां भवति! ३–भो भोः कदर्यपुरुषाः कृपणमनुष्याः, अद्य च विषुवद्दिनम् विषुवदाख्यं पर्वास्ति, मेषराशौ सूर्यसंक्रमणं'विषुवत्'उच्यते, किं च वो युष्माकं सुबहु वित्तमप्यस्ति, तदेतद् वित्तं किं क्रियताम्?

अत्रोत्तरम्—**न दीयताम्**। 'नदी' 'इयताम्' 'न दीयताम्' इति पदच्छेदः। तत्र प्रथमस्योत्तरं 'नदी' इति, द्वितीयस्य 'इयताम्' प्रश्नवाक्याक्षरतुल्यसंख्यानामित्यर्थः, अयं भावः, 'इदमस्तु सन्निकृष्टे समीपतरवर्ति चैतदो रुपम्' इत्यभियुक्तोक्त्या, इयतामितीदंशब्देन सन्निकृष्टत्वात् प्रश्नवाक्याक्षरसंख्यैव निर्दिश्यते, प्रश्नवाक्ये च चतुर्दशाक्षराणि, तावन्त्येव वसन्ततिलकवृत्तेऽपि भवन्ति। तृतीयस्योत्तरम्, 'न दीयताम्' न दातव्यमित्यर्थः। कार्पण्योपहतानां लक्ष्मीवाहनानामुचितमेवेदमुत्तरम्।

लुङ्मुदाहरति,

**को माद्यति मकरन्दैस्तनयं कमसूत जनकराजसुता।**
**कथय कृषीवल! शस्यं पक्वं किमचीकरस्त्वमपि॥४८॥**

**क इति,** १–मकरन्दैः पुष्परसैः को माद्यति हृष्यति? २–जनकराजसुता

सीता कं तनयम् असूत उत्पादितवती ? २—कृषीवल ! हे कर्षक । त्वं पक्वं परिपाकमाप्तं शस्यं धान्यं किमचीकरः किं कारितवान् ?

अत्रोत्तरम्—**अलीलवम्** । 'अली' 'लवम्' 'अलीलवम्' इत्यत्र पदच्छेदः । तत्र प्रथमोत्तरम्—'अली' भ्रमर इति । द्वितीयम्—'लवम्' लवनामकं पुत्रम् । तृतीयम्—'अलीलवम्' अचिच्छिदम् । णिजन्ताल्लुनाते-र्लुङि उत्तमपुरुषैकवचनरूपम् ।

अस्यैव मध्यमपुरुषमुदाहरति—

**पृच्छति पुरुषः केऽस्यां समभूवन् वज्रकृत्तपत्ततयः ।**
**बहुभयदेशं जिगमिषुरेकाकी वार्यते च कथम् ॥४६॥**

**पृच्छतीति**, कश्चन पुरुषः पुरुषान्तरं पृच्छति १—यद् अस्यां भूमौ वज्रेण कृत्ताः खण्डिताः पत्ततयः पत्त्रमूलानि येषां ते के समभूवन् ? २—बहु भयं यत्र तादृशे देशे एकाकी सहचारिणं विनैव, जिगमिषुर्गन्तुमिच्छुः, पुरुषः कथं केन प्रकारेण कैः शब्दैरित्यर्थः, वार्यते ?

अत्रोत्तरम्—**मानवनगाः** । 'मानव नगाः' 'मा अनवन गाः' इति पदच्छेदः । तत्र प्रथमोत्तरम्—हे 'मानव ! नगाः' पर्वताः । द्वितीयम्—हे अनवन हे रक्षारहित ! (अवतेर्ल्युटि अवनं रक्षणमित्यर्थः, न अवनं यस्य सः अनवनः, सम्बुद्धौ सुलोपः,) त्वं मा गाः न गच्छ । इमे द्वे अपि लुङ उदाहरणे क्रमानुरोधेन वक्ष्यमाणलिङुदाहरणानन्तरमेवोदाहार्ये ।

लङमुदाहरति—

**किमकरवमहं हरिर्महीध्रं**
**स्वभुजबलेन गवां हितं विधित्सुः ।**
**प्रियतमवदनेन पीयते कः**
**परिणतबिम्बफलोपमः प्रियायाः ॥ ५० ॥**

**किमिति**, १—स्वभुजयोर्बलेन, गवां धेनूनां हितं विधित्सुर्विधातुमिच्छुः, हरिः कृष्णोऽहं महीध्रं पर्वतम्, किमकरवम् ? २—परिणतं परिपक्वं यद् बिम्बफलं तदुपमस्तत्सदृशः प्रियायाः दयितायाः सम्बन्धी कः पदार्थः, प्रियतमस्य पत्युर्वदनेन मुखेन पीयते ?

अत्रोत्तरम्—**अधरः**। पदच्छेदाभावात् पूर्वविलक्षणमभङ्गोत्तरमिदम्। प्रथमोत्तरम्—'अधरः' धारितवान्। धरतेर्लङि मध्यमपुरुषैकवचनम्। द्वितीयमुत्तरम् 'अधरः' अधरोष्ठः।

लङ उत्तमपुरुषे यथा—

**परिहरति भयात्तवाहितः कि-**
**कमथ कदापि न विन्दतीह भीतः।**
**कथय किमकरोरिमां धरित्रीं-**
**नृपतिगुणैर्नृपते! वरस्त्वमेकः॥ ५१॥**

**परिहरतीति,** १—तवाहितः शत्रुः, भयात् किं परिहरति त्यजति? २—भीतः पुरुषः कं पदार्थं कदापि न विन्दति लभते? ३—हे नृपते! नृपतिगुणैः प्रजारञ्जनादिभिः, वरः श्रेष्ठः, एकः अद्वितीयः त्वम्, इमां धरित्रीं पृथ्वीं किम् अकरोः, इति कथय।

अत्रोत्तरम्—**समरञ्जयम्**। 'समरम्' 'जयम्' 'समरञ्जयम्' इति पदच्छेदः। तत्र प्रथमोत्तरम्—'समरम्' संग्रामम्। द्वितीयम्—'जयम्' उत्कर्षम्। तृतीयं 'समरञ्जयम्'—अहर्षयम्। समुपसृष्टाद् रञ्जधातोः रूपम्। इमे द्वे अप्युदाहरणे क्रमानुरोधेन लोडुदाहरणानन्तरमेवोदाहर्तव्ये।

प्रवर्तनायां लिङमुदाहरति—

**कीदृक् सेना भवति रणे दुर्वारा**
**वीरः कस्मै स्पृहयति लक्ष्मीमिच्छन्।**
**का सम्बुद्धिर्भवति भुवः, संग्रामे**
**किं कुर्वीध्वं सुभटजना! भ्रातृव्यान्॥ ५२॥**

**कीदृगिति,** १—रणे कीदृक् सेना दुर्वारा दुःखेन वारयितुं शक्या? २—लक्ष्मीं राजश्रियम् इच्छन्, वीरः कस्मै पदार्थाय, स्पृहयति कामयते? ३—भुवः पृथिव्याः, पृथिवीवाचकशब्दस्येत्यर्थः, सम्बुद्धिः सम्बोधनैकवचनान्तं रूपं का कीदृग्? ४—हे सुभटजनाः! हे श्रेष्ठा योद्धारः! यूयं संग्रामे भ्रातृव्यान् शत्रून्, "व्यन्सपत्ने" इति भ्रातुर्व्यन् प्रत्ययः, किं कुर्वीध्वम्?

अत्रोत्तरम्—**पराजयेमहि**। परा, आजये, महि, पराजयेमहि,

पदच्छेदः। तत्र प्रथमोत्तरम्—'परा' उत्कृष्टा। द्वितीयम्—'आजये' संग्रामाय। तृतीयम्—हे 'महि' ! "अम्बार्थनद्योर्ह्रस्वः" इति महीशब्दस्य सम्बुद्धौ ह्रस्वः। चतुर्थम्—'पराजयेमहि' पराभवेम। परापूर्वकाज्जयतेर्विधिलिङि उत्तमपुरुषैकवचने रूपम्। लिङ उत्तमपुरुषैकवचने यथा—

**कंसारातेर्वद गमनं केन स्यात्**
**कस्मिन् हृष्टिं संलभते स्वल्पेच्छुः।**
**कं सर्वेषां शुभकरमूचुर्धीराः**
**किं कुर्यास्त्वं सुजन ! सशोकं लोकम् ॥ ५३ ॥**

**कंसेति,** १—कंसस्यारातेः शत्रोर्भगवतो विष्णोः, गमनं केन वाहनेन स्यात्? २—स्वल्पमिच्छुः स्वल्पेच्छुः स्वल्पाभिलाषः पुरुषः, कस्मिन् वस्तुनि, हृष्टिं हर्षं संलभते प्राप्नोति ? ३—धीराः विद्वांसः, सर्वेषां प्राणिनां शुभकरं कल्याणप्रदं कं पदार्थमूचुः प्रोक्तवन्तः ? ४—हे सुजन ! त्वं सशोकं शोकग्रस्तं लोकं किं कुर्याः ?

अत्रोत्तरम्—**विनोदयेयम्**। विना, उदये, अयम्, विनोदयेयम्, इति पदच्छेदः। तत्र प्रथमोत्तरम्—'विना' पक्षिणा गरुडेनेत्यर्थः। द्वितीयम्-'उदये' अभिवृद्धौ। तृतीयम्—'अयम्' शुभावहं दैवम्। चतुर्थम्—'विनोदयेयम्' आश्वासयेयम्, सान्त्वनाशब्दैर्गतशोकं कुर्यामित्यर्थः, अनुरञ्जयेयम् वा। णिजन्ताण्णुद्धातोर्लिङि रूपम्।

**वारणेन्द्रो भवेत् कीदृक् प्रीतये भृङ्गसंहतेः।**
**यद्ययक्ष्यं तदास्मै किमकरिष्यमहं धनम् ॥ ५४ ॥**

**वारणेन्द्र इति,** १—कीदृग् वारणेन्द्रो गजेन्द्रः, भृङ्गसंहतेर्भ्रमरसमुदायस्य प्रीतये प्रीतिमुत्पादयितुम्, भवेत् प्रभवेत्? २—यदि अहम् अयक्ष्यं यज्ञमकरिष्यम्, तदा अस्मै विप्राय, धनं किम् अकरिष्यम् ?

अत्रोत्तरम्—**समदास्यः**। इदमेकमेव पदम्। १—समदं मदसहितम् आस्यं मुखं यस्य स 'समदास्यः' वारणेन्द्रो भृङ्गाणां प्रीतिकरः। २—त्वं विप्राय धनं 'समदास्यः' व्यतरिष्यः। संपूर्वाद् ददातेर्लृङि मध्यमैकवचनरूपम्।

---

(१) अयः शुभावहो विधिरित्यमरः।

अस्यैव द्वितीयमुदाहरणं यथा—

**काले देशे यथायुक्तं नरः कुर्वन्नुपैति काम्।**
**भुक्तवन्तावलप्स्येतां किमन्नमकरिष्यताम् ॥ ५५ ॥**

**काल इति,** १—नरः, काले देशे च यथायुक्तं युक्तमनतिक्रम्य कालानुरूपं देशानुरूपं च कर्म कुर्वन् कामुपैति ? २—यदि भुक्तवन्तौ नरौ अन्नम् अलप्स्येताम्, तर्हि तत् किम् अकरिष्यताम् ?

अत्रोत्तरम्—**अहास्यताम्**। इदमप्येकमेव पदम्। १—कालदेशानुरूपं कुर्वन् नरः 'अहास्यताम्' अनुपहसनीयताम् उपैति, हसितुं योग्यो हास्यः, न हास्यः अहास्यः, ततो भावे तल्, कर्मणि द्वितीया। २—भुक्तवन्तौ नरौ अन्नम् 'अहास्यताम्' अत्यक्ष्यताम्, जहातेर्लृङ्, प्रथमपुरुषद्विवचनम्।

एषु पूर्वोक्तेषु सर्वेष्वप्युदाहरणेषूत्तराणां सुबन्ततया तिङन्ततया च व्यवस्थितिः

इति नामाख्यातजातिः।

अथ तार्क्य—सौत्र—शाब्दीय-शास्त्रजानां पृष्टानां लक्षणान्येकयैव कारिकयाह—

**ज्ञेयं तर्कदृशा तार्क्यं सौत्रं सूत्रोत्तरैस्तथा।**
**शाब्दीयं शब्दसंज्ञाभिः शास्त्रजं शास्त्रभाषया ॥५६॥**

**ज्ञेयमिति,** तार्क्यम्[१]—तर्कशास्त्रसम्बन्धि पृष्टं तर्कदृशा तर्कशास्त्रज्ञानेन ज्ञेयम्, तथा सौत्रं सूत्रसम्बन्धि पृष्टं सूत्रोत्तरैः सूत्ररूपैरुत्तरैर्ज्ञेयम्, यत्र सूत्ररूपम् उत्तरं तत् सौत्रं पृष्टमुच्यते इति भावः। शाब्दीयं शब्दशास्त्रसम्बन्धि पृष्टं शब्दसंज्ञाभिः शब्दशास्त्रप्रसिद्धाभिः संज्ञाभिर्ज्ञेयम्, शब्दशास्त्रप्रसिद्धसंज्ञैव यत्रोत्तररूपा तच्छाब्दीयं पृष्टमुच्यत इत्यर्थः। शास्त्रजमायुर्वेदादिशास्त्रजं पृष्टं तत्तच्छास्त्राणां भाषया परिभाषया विज्ञेयम्।

तत्र तार्क्योदाहरणं यथा—

**हिमानीस्थगितौ स्यातां कीदृशौ शशिभास्करौ।**
**कः पूज्यः कः प्रमाणेभ्यो न प्रभाकरसम्मतः ॥ ५७ ॥**

---

१—तर्कशब्दाद् भवार्थे यति, स्वार्थे प्रज्ञाद्यण्। क्वचित्तु 'तार्कम्' इति पाठः, तत्र शैषिकोऽण्।

**हिमानीति,** १—महद्धिमं हिमानी, इन्द्रवरुणेत्यादिनानुगागमो ङीष् च, तया स्थगितावाच्छादितौ शशिभास्करौ चन्द्रसूर्यौ कीदृशौ भवतः ? २—पूज्यः कः ? ३—प्रमाणेभ्यः प्रत्यक्षादिभ्यः तर्केभ्यो वा (हेतौ पञ्चमी) कः पदार्थः प्रभाकरसंमतो न ? प्रभाकरः श्रीकुमारिलभट्टपादशिष्यो गुरुनाम्ना प्रसिद्धो मीमांसाचार्यविशेषः।

अत्रोत्तरम्—**अभावः**। 'अभौ' 'अः' 'अभावः' इतिपदविभागः। १—हिमाच्छादितौ शशिभास्करौ 'अभौ' भा कान्तिः, तद्रहितौ। २—'अः' वासुदेवाख्यो विष्णुः पूज्यः। ३—'अभावः' पदार्थः प्रभाकरस्य संमतो न। अधिकरणादतिरिक्तस्याभावस्य कैरपि प्रमाणैरनुपलम्भादभावोऽधिकरणस्वरूप इति प्राभाकाराः।

अस्यैव द्वितीयमुदाहरणं यथा—

> **के प्रवीणाः कुतो हीनं जीर्णं वासोंऽशुमांश्च कः।**
> **निराकरिष्णवो बाह्यं योगाचाराश्च कीदृशाः ॥ ५८ ॥**

**क इति,** १—प्रवीणाः चतुराः के ? २—जीर्णं पुरातनं वासो वस्त्रं कुतः कस्माद् वस्त्राद् हीनं निकृष्टम् ? ३—अंशुमान्-अंशवः किरणाः, तद्वान् कः पदार्थोऽस्ति ? ४—बाह्यं प्रत्यक्षादिप्रमाणैर्बहिरुपलभ्यमानं घटादिपदार्थजातम्, निराकरिष्णवः प्रत्याचक्षाणाः योगाचारसंज्ञका बौद्धविशेषाः कीदृशाः ?

अत्रोत्तरम्—**विज्ञानवादिनः**। १—'विज्ञाः' 'नवात्' 'इनः' 'विज्ञान-वादिनः' इति पदच्छेदः। १—'विज्ञाः' विशेषज्ञाः प्रवीणाः भवन्ति। २—'नवात्' नूतनाद् वस्त्राद् जीर्णं वस्त्रं हीनं भवति। ३—'इनः' सूर्यः अंशुमान् भवति। ४—बाह्यपदार्थापलापिनो योगाचारबौद्धाः 'विज्ञानवादिनः'। योगाचारा हि बाह्यघटपटादिपदार्थजातं विज्ञानस्यैवाकारविशेषं मन्वते। तन्मते विज्ञानातिरिक्तस्य बाह्यप्रपञ्चस्य पृथक्सत्ताया अनभ्युपगमः। अत्र 'विज्ञानवादिनः' इत्युत्तररूपं पदं तर्कविदैव ज्ञातुं शक्यम्, तर्कशास्त्र एवास्य पदस्य प्रायेण प्रयोगात्।

सौत्रं पृष्टमुदाहरति—

> **को नयति जगदशेषं क्षयमथ बिभराम्बभूव कं विष्णुः।**
> **नीचः कुत्र सगर्वः पाणिनिसूत्रं च कीदृत्तम् ॥ ५९ ॥**

**क इति,** १—अशेषं सकलं जगत् कः क्षयं नयति नाशयति ? २—विष्णुः कं

पदार्थं बिभराम्बभूव धारयामास ? ३—नीचः पुरुषः कुत्र वस्तुनि सगर्वः गर्वं करोति ? ४—पाणिनेः सूत्रं कीदृत्तम् ?

अत्रोत्तरम्–**यमो गन्धने**। 'यमः' 'अगम्' 'धने' इति पदच्छेदः। १–यमः कालः सकलं जगत् क्षयं नयति। २--विष्णुः 'अगम्' पर्वतं गोवर्धनाख्यं कृष्णावतारे धारयामास। ३—नीचः 'धने' गर्वायते। ४—इमान्युत्तराणि यस्यावयवाः तत् पाणिनिसूत्रम् "यमो गन्धने" १-२-१५ इति। अत्रोत्तराणां सूत्रावयवत्वात् सौत्रं पृष्टमिदम्।

अस्यैव द्वितीयोदाहरणं यथा—

**किं स्याद् विशेष्यनिष्ठं का संख्या वदत पूरणी भवति।**
**नीचः केन सगर्वः सूत्रं चान्द्रस्य कीदृत्तम् ॥ ६० ॥**

**किमिति,** १—विशेष्यनिष्ठं विशेष्ये निष्ठा पर्यवसानं यस्य तद् विशेष्यानुसारिलिङ्गवचनकम्, विशेष्यद्वारा क्रियान्वयि वा स्वार्थं पुरस्कृत्य विशेष्यबोधकं वा विशेष्ये गुणीभूतं वा किं पदं स्यात्? २—पूरणी पूरयतीति पूरणी सर्वसंख्यानु सम्मिलिता केवलान्वयिनीतियावत्, अथवा पूरणी विषमसंख्यानाम् एकत्रिपञ्चादीनां पूरणी समसंख्यात्वसंपादिका संख्या का कतमा ? ३—नीचः केन कारणेन सगर्वः ? ४—एतत्प्रश्नानामुत्तरपदानि यदवयवाः तत् चान्द्रस्य चान्द्रव्याकरणस्य सूत्रं कीदृत्तम् ?

अत्रोत्तरम्—**विशेषणमेकार्थेन** । 'विशेषणम्' 'एका' 'अर्थेन' इति पदच्छेदः। १–'विशेषणम्' विशेष्यनिष्ठं स्यात्। २--पूरणी संख्या 'एका' अस्ति तस्याः स्वेतरद्व्यादिसंख्यासु सर्वत्र मिलितत्वात्। अथवा एकत्रिपञ्चादयो विषमसंख्याः अस्या एव योगेन द्विचतुःषडादिसमसंख्याः क्रियन्ते। ३—नीचाः 'अर्थेन' धनेन सगर्वा भवन्ति। ४—एतान्युत्तरपदानि यत्रायान्ति तच्चान्द्रव्याकरणसूत्रं "विशेषणमेकार्थेन" इति। इदमपि पृष्टं सूत्रभवत्वात् पूर्ववत् सौत्रम्।

इतिसौत्रजातिः।

शाब्दीयजातिमुदाहरति—

**न श्लाघते खलः कस्मै सुप्तिङन्तं किमुच्यते।**
**लादेशानां नवानां च तिङां किं नाम कथ्यताम् ॥ ६१ ॥**

नेति । १—खलो दुष्टः कस्मै न श्लाघते न स्तौति ? "श्लाघह्नुङ्स्थाशपां ज्ञीप्समानः" इत्यनेन संप्रदानत्वाच्चतुर्थी । २—सुबन्तं तिङन्तं च किम् उच्यते व्यपदिश्यते ? ३—नवानां नवसंख्यकानां लादेशानां लडादिलकारस्थानेषु जातानां तिङां तिप्तस्झीत्यादीनां किं नाम का संज्ञा ?

अत्रोत्तरम्–**परस्मैपदम्**। 'परस्मै' 'पदम्' इति पदच्छेदः। १—खलः 'परस्मै' अन्यस्मै जनाय न श्लाघते। २–सुप्तिङन्तम् 'पदम्' इत्युच्यते। ३–लादेशानां तिङां नाम 'परस्मैपदम्' इति । अत्रोत्तरस्य शब्दशास्त्रप्रसिद्धसंज्ञारूपत्वाच् शाब्दीयं पृष्टमिदम् । परस्मैपदमित्यत्र "वैयाकरणाख्यायां चतुर्थ्याः" इत्यनुवर्तमाने "परस्य च" इत्यनेन चतुर्थ्या अलुक् ।

अस्यैव द्वितीयमुदाहरणं यथा—

**किमव्ययतया ख्यातं कस्य लोपो विधीयते ।**
**ब्रूत शब्दविदो ज्ञात्वा समाहारः क उच्यते ॥ ६२ ॥**

**किमिति,** १–अव्ययतया किं पदं ख्यातं प्रसिद्धम् ? २--लोपः अदर्शनं कस्य विधीयते ? ३—समाहारः उदात्तत्वानुदात्तत्वयोर्वर्णधर्मयोर्यत्र संमिश्रणं स क उच्यते ? कया संज्ञया व्यवह्रियत इति प्रश्नत्रितयोत्तरं हे शब्दविदः शब्दशास्त्रज्ञा यूयं ब्रूत ।

अत्रोत्तरम्—**स्वरितः**। 'स्वर्' 'इतः' इति पदच्छेदः । १—'स्वर्'

---

**१ सततं श्लाघते कस्मै नीचो, भुवि किमुत्तमम् ।**
**कर्तर्यपि रुचादीनां धातूनां किं पदं भवेत् ॥**

इदं पद्यमपि कचित् प्राचीनपुस्तके शाब्दीयपृष्टोदाहरणत्वेन धृतमवलोक्यते पूर्वार्धं त्वस्य स्पष्टमेव । उत्तरार्धं व्याख्यायते, 'रुच् दीप्तावभिप्रीतौ च' इत्यादीनां धातूनां कर्तर्यर्थे किं पदं भवेत् ?

अत्रोत्तरम्—**आत्मनेपदम्** । 'आत्मने' 'पदम्' इति पदच्छेदः। १—नीचः 'आत्मने' श्लाघते, आत्मस्तुतिं करोतीत्यर्थः । २—भुवि 'पदम्' मन्त्रित्वादिपदम्, प्रतिष्ठास्थानं वा, उत्तमम् । ३–रुचादीनां धातूनाम् अनुदात्तेत्त्वाद् 'आत्मनेपदम्' भवति ।

इत्यव्ययत्वेन प्रसिद्धम्। २—'इतः' इत्संज्ञकस्य "तस्य लोपः" इत्यनेन लोपो विधीयते। ३—समाहारः 'स्वरितः' इत्युच्यते, तदुक्तं पाणिनीये "समाहारः स्वरितः" इति।

शास्त्रजं पृष्टमुदाहरति—

**मेघात्यये भवति कः समदः सुभगं च किमधरन् मुरजित्।**
**कटुतैलमिश्रितगुडो नियतं विनिहन्ति कं त्रिगुणसप्तदिनैः॥६३॥**

**मेघेति,** १—मेघात्यये शरदि कः समदः कामोन्मत्तः भवति? २—किं च तदैव काले किं सुभगं मनोहरं भवति? किंशब्दो देहलीदीपन्यायेनोभयत्र अन्वेति। ३—मुरजित् कृष्णः किम् अधरत्? ४—कटुतैलेन सार्षपादिना मिश्रितो गुडः, नियतम् अव्यभिचारेण, त्रिगुणैस्त्रिसंख्यया गुणितैः सप्तभिर्दिनैः एकविंशत्या दिवसैरित्यर्थः, कं रोगं विनिहन्ति?

अत्रोत्तरम्—**श्वासरोगम्।** 'श्वा' 'सरः' 'अगम्' इति पदच्छेदः। १—शरदि 'श्वा' कुक्कुरः, समदो भवति। २—तदैव च 'सरः' तडागः कमलविकासेन सुभगं भवति। ३—मुरजित् 'अगम्' गोवर्धनपर्वतम्, अधरत्। ४—कटुतैलमिश्रितो गुडः 'श्वासरोगम्' एकविंशत्या दिवसैर्निवारयति। अत्र 'श्वासरोगम्' इत्युत्तरम् आयुर्वेदशास्त्रजम्।

द्वितीयमुदाहरति—

**कीदृग् घस्रे दीपवर्तेः शिखा स्याद्**
**उष्ट्रः पृच्छत्याभजन्ते मृगाः किम्।**
**देवामात्ये किंगते प्रायशोऽसौ**
**लोकः कुर्यान्नो विवाहं विविक्तः॥ ६४॥**

**कीदृगिति,** १—घस्रे दिने दीपवर्तेः शिखा ज्वाला कीदृक् स्यात्? २—मृगाः किम् आभजन्ते आश्रयन्ते इति उष्ट्रः पृच्छति। ३—देवानाम् अमात्ये मन्त्रिणि वृहस्पतौ किं गते कतमत् स्थानं प्राप्ते सति विविक्तो विवेकसंस्कृतमतिः, असौ लोकः, प्रायशः विवाहं नो कुर्यात्?

अत्रोत्तरम्—**विभाकरभवनम्।** 'विभा' 'करभ! वनम्' इत्येवमुत्तरपदच्छेदः। १—दिने सूर्यप्रकाशोपहतत्वाद् दीपशिखा 'विभा' विगता भा

कान्तिर्यस्याः सा कान्तिरहिता भवतीत्यर्थः । २—' हेकरभ ! ' हे उष्ट्र ! ' वनम् ' मृगा आश्रयन्ते, इत्युष्ट्रं प्रति तत्प्रश्नोत्तरम् । ३—बृहस्पतौ ' विभाकरभवनम् ' विभाकरस्य सूर्यस्य भवनं[1] सिंहराशिम्, गते लोको विवाहं न करोति, सिंहस्थे गुरौ विवाहादिशुभकर्मनिषेधात् । अत्रोत्तरं ' विभाकरभवनम् ' इति ज्योतिःशास्त्रजम् ।

इति शास्त्रजजातिः ।

अथैकेन वर्णोत्तरवाक्योत्तरजाती लक्षयति—

**वर्ण एवोत्तरं यत्र तद् वर्णोत्तरमुच्यते ।**
**वाक्यं यत्रोत्तरं तत्तु वाक्योत्तरमिति स्मृतम् ॥६५॥**

**वर्णेति,** यत्र पृष्टे एकवर्ण एवाक्षरं तद् वर्णोत्तरमुच्यते । यत्र तु वाक्यरूपमुत्तरं तद् वाक्योत्तरं स्मृतम् ।

तत्र वर्णोत्तरजात्युदाहरणं यथा—

**कौ विख्यातावहेः शत्रू शोकं वदति किं पदम् ।**
**कोऽभीष्टोऽत्र दरिद्रस्य सेव्यन्ते के च भिक्षुभिः ॥६६॥**

**काविति,** १—अहेः सर्पस्य शत्रू कौ ? २—किं कतमत् पदं शोकं वदति शोकार्थकं भवति ? ३—अत्र लोके दरिद्रस्य नरस्य कः पदार्थोऽभीष्टः ? ४—भिक्षुभिः क्षपणकैः ( बौद्धसंन्यासिभिः ) के सेव्यन्ते ?

अत्रोत्तरम्—**वीहाराः** । ' वी ' ' हा ' 'राः' इति पदच्छेदः । १—विश्व विश्व 'वी' पक्षिणौ गरुडमयूरौ सर्पस्य शत्रू भवतः । २—'हा' इतिपदं शोकार्थकम् । ३—'राः' धनं दरिद्रस्याभीष्टः । ४—भिक्षुभिः 'वीहाराः' बौद्धमन्दिराणि सेव्यन्ते । विहरन्त्येष्विति 'वीहाराः' अधिकरणे घञ् । "उपसर्गस्य घञ्यमनुष्ये बहुलम् " इति वेरुपसर्गस्य दीर्घः । अत्र वीत्यादीन्युत्तराणि वर्णात्मकानि ।

---

१ तदुक्तं जातकचन्द्रिकायाम्—

**सूर्यस्य सिंहो वृषभो विधोश्च**
**क्रियः कुजस्य प्रमदा बुधस्य ।**
**धनुर्गुरोः स्याद् घटभृद् भृगोश्च**
**कुम्भः शनेः स्याद् भवनं त्रिकोणम् ॥**

अस्यैव द्वितीयं यथा—

**किं मुञ्चन्ति पयोवाहाः कीदृशी हरिवल्लभा ।**
**पूजायां किं पदं कोऽग्निः कः कृष्णेन हतो रिपुः ॥ ६७ ॥**

**किमिति,** १—पयोवाहाः मेघाः किं मुञ्चन्ति वर्षन्तीत्यर्थः ? २—हरेर्विष्णोर्वल्लभा प्रिया लक्ष्मीः कीदृशी ? ३—पूजायां पूजार्थे किं पदम् ? ४—अग्निः कः किंपदवाच्यः ? ५—कृष्णेन को रिपुर्हतः ?

अत्रोत्तरम्—**कंसासुरः** । वर्णा एवात्र पदानि । १—पयोवाहाः 'कं' जलं मुञ्चन्ति । २—हरिवल्लभा 'सा' अः विष्णुः, तेन सह वर्तत इति 'सा' विष्णुसहिता । ३—'सु' इति पूजार्थकं पदम् । ४—अग्निः 'रः' इति पदवाच्यः, तदुक्तमेकाक्षरे 'रश्च रामेऽनले बन्हौ भूमावपि धनेऽपि च' इति । ५—'कंसासुरः' कंसाख्यो दैत्यः कृष्णेन हतः ।

इतिवर्णोत्तरजातिः ।

वाक्योत्तरमुदाहरति—

**दधौ हरिः कं शुचि कीदृगभ्रं-**
**पृच्छत्यकः किं कुरुते सशोकः ।**
**श्लोकं विधायापि किमित्युदारः**
**कविर्नतोषं समुपैति भूयः ॥ ६८ ॥**

**दधाविति,** १—हरिः कं दधौ ? २—कीदृगभ्रं मेघः शुचि शुक्लं भवति ? ३—सशोकः शोकसहितः पुरुषः किं कुरुते इति अकः कं दुःखं न विद्यते यस्य स दुःखरहितः पृच्छति । ४—उदारो महाशयः कविः श्लोकं पद्यं विधाय रचयित्वापि भूयो बहुतरं यथा स्यात् तथा तोषं प्रीतिं किमिति कुतो हेतोः न समुपैति न विन्दति ?

अत्रोत्तरम्—**अगमकमकरोदिति** । 'अगम्' 'अकम्' 'अक ! रोदिति' इति पदच्छेदः । १—तत्र हरिः 'अगम्' गोवर्धनं दधौ । २—'अकम्' जलं तद् विहीनं शरत्कालिकमभ्रं शुक्लं भवति । ३—हे 'अक' ! हे दुःखरहित ! सशोकः पुरुषः 'रोदिति' इति अकं ( दुःखरहितपुरुषम् ) प्रति तत्प्रश्नस्योत्तरम् । ४–कविः श्लोकं रचयित्वापि 'अगमकम्' सुस्पष्टमर्थस्याप्रतिपादकम् 'अकरोत्'

रचितवान् 'इति' हेतोर्न तुष्यति । अत्र 'अगमकम् अकरोत्' इति सुप्तिङन्तसमुदायरूपं वाक्यमुत्तरमिति वाक्योत्तरं पृष्टमिदम् ।

अस्यैव द्वितीयमुदाहरणं यथा—

लक्ष्मीधरः पृच्छति कीदृशः स्यात्
नृपः सपत्नैरपि दुर्निवारः ।
अकारि किं ब्रूहि नरेण सम्यक्
पितृत्वमारोपयितुं स्वकीयम् ॥ ६१ ॥

इति बौद्धश्रीधर्मदासविरचितविदग्धमुखमण्डनाख्यकाव्यालङ्कारशास्त्रे द्वितीयः परिच्छेदः ।

**लक्ष्मीति,** १—लक्ष्मीधरः वक्षसा लक्ष्मीं धारयन् नारायणः, श्रीमान् पुरुषो वा पृच्छति यत् कीदृशो नरः सपत्नैः शत्रुभिरपि दुर्निवारः दुःखेन वारयितुं शक्यः ? २—नरेण स्वकीयपितृत्वं जनकत्वम्, आरोपयितुं जनयितुं पिता भवितुमिति यावत्, किं सम्यगकारि अनुष्ठितम् ?

अत्रोत्तरम्—**समजानितनयः** । 'सम ! जनितनयः' 'समजनि तनयः' इति पदच्छेदः । १—लक्ष्मीधरं प्रति तत्प्रश्नोत्तरं यथा—मा लक्ष्मीः, तया सह वर्तत इति समः, सम्बोधने सम्बुद्धिलोपे हे सम ! लक्ष्मीधर ! जनितनयः जनितो नयो नीतिर्येन स नीतिमान् नरः सपत्नैरपि दुर्निवारः । २—नरेण पिता भवितुं 'समजनि' उदपादि 'तनयः' सुतः, पुत्र उत्पादित इत्यर्थः, पुत्रोत्पादक एव पिता भवति । अत्राप्युत्तरं पूर्ववद् वाक्यात्मकम् ।

इति श्रीपरमेश्वरानन्दशर्मकृतायां विदग्धमुखमण्डनव्याख्यायां-

द्वितीयः परिच्छेदः ।

# ❋ तृतीयः परिच्छेदः ❋

अथैकेन श्लोकोत्तर–खण्डोत्तर-पादोत्तरपृष्ठानि लक्षयति ।

**श्लोक एवोत्तरं यत्र तच्छ्लोकोत्तरमुच्यते ।**
**खण्डोत्तरं भवेदर्धश्लोकात् पादात् तदुरत्तम् ॥ १ ॥**

**श्लोकेति,** यत्र पृष्टे श्लोकात्मकमुत्तरं तच्छ्लोकोत्तरं पृष्टम् । यत्र च श्लो श्लोकात् पादद्वयादुत्तरं दीयते तत् खण्डोत्तरं नाम पृष्टम् । यत्र पुनः पादाच्छ्लो चतुर्थांशाद् उत्तरं दीयते तत् पादोत्तरं नाम पृष्टं व्यपदिश्यते । तत्र श्लोकोत्तरो हर्तुं पद्ययुग्मेन प्रश्नान् आह—

**कं देवं केऽर्चयन्ति, स्फुटरुचि निशि किं, कीदृशी दुःखिनी स्त्री कीदृक् चक्रं सदास्ते, क्व च तव विजयः, प्रावृषः कीदृशं खम् कामाहुः प्रेतयोग्यां कथय, सुकृतिनः कीदृशाः स्युः पुमांसः कं धत्ते कं च धत्ते गगनतलमलं प्रेक्षणीयं जनानाम् ॥ २**
**सक्षः कीदृक् चकास्ति स्फुटनवकुसुमाशोकमासाद्य कां किं मुञ्चन्त्यम्बुवाहा भवदरिनिवहे संज्वरः किंभवश्च किं नेत्रप्रावृतिः स्याद् तिशयलघवः के च को व्रीहिभेदः प्रायेण प्रावृषेण्याः प्रियतम ! दिवसाः कीदृशाःकीदृशाःस्युः ॥ ३**

**किमिति,** १–कं देवं के अर्चयन्ति ? २–निशि स्फुटा स्पष्टा रुचिः कान्तिर्यस्य तत् किं वस्तु ? ३–दुःखिता वियोगदुःखसंतप्ता स्त्री कीदृशी भवति ? ४–चक्रं रथाङ्गं सदा कीदृग् किंविधम् अस्ति तिष्ठति ? ५–तव विजयः क्व वर्तते अवलम्बित इति शेषः ? ६–प्रावृषः वर्षर्तोः सम्बन्धि खम् आकाशं कीदृशम् ? ७–प्रेतयोग्यां प्रेता मृताः, तद्योग्यां काम् आहुः कथयन्ति, इति कथय ? ८–सुकृतिनो विद्वांसः पुमांसः कीदृशा भवन्ति ? ९–गगनतलं कर्तृ जनानां प्रेक्षणीयं दर्शनीयं कं धत्ते कं च धत्ते कौ द्वौ पदार्थौ धारयतीत्यर्थः ?

**सक्ष इति,** १०–सक्षः सक्षाख्यो वृक्षः, स्फुटानि विकसितानि नवानि

कुसुमानि पुष्पाणि येषां तादृशाः अशोका अशोकवृक्षाः, यत्र तादृशं कालं वसन्तसमयम्, आसाद्य प्राप्य, कीदृक् किंविधःसन् चकास्ति शोभते ? ११—अम्बुवाहा मेघाः किं मुञ्चन्ति ? १२—भवताम् अरिनिवहे शत्रुसमूहे संज्वरः संतापः किंभवः कस्माद् भवतीति किंभवः किंनिमित्तजः ? १३—नेत्रयोः प्रावृतिः प्रकृष्टावरणं प्रच्छादनं किं स्यात् ? १४—अतिशयेन लघवः ह्रस्वपरिमाणाः के पदार्थाः ? १५—व्रीहिभेदः धान्यविशेषः कः ? १६—हे प्रियतम ! प्रावृषेण्याः प्रावृषि भवा-वर्षाकालिका दिवसाः कीदृशाः कीदृशाः स्युः ? कीदृशा इति प्रश्नवाचकस्य द्विरुक्तिरुत्तरद्वयोपन्यासाय, प्रावृषेण्यदिनानां विशेषणद्वयं ब्रूहीत्यर्थः ।

अत्रोत्तरमनुष्टुप्श्लोकात्मकं यथा—

**अञ्जनाभमहावारिवाहौघनिचिताम्बराः ।**
**कदम्बकन्दलीकन्दरजःपद्मलवायवः ॥**

अम्, जनाः, भम्, अहावा, अरि, वाहौ, घनि, चिताम्, वराः, कदम् बकम्, दली, कम्, दरजः, पद्म, लवाः, यवः, इति पदच्छेदः ।

( १ ) 'अम' विष्णुं 'जनाः' अर्चयन्ति । २—'भम्' नक्षत्रम् निशि स्फुटरुचि भवति । ३—दुःखिनी स्त्री 'अहावा' हावरहिता तिष्ठति । अल्पसंलक्ष्यविकारो भावो हावशब्दार्थः । ४—चक्रं सदा 'अरि' अराणि विद्यन्ते यस्मिंस्तादृशं भवति । चक्रस्य नाभिनेम्योः सम्बद्धा दण्डा अराण्युच्यन्ते । ५—विजयः 'वाहौ' भुजेऽवलम्बितः । ६—वर्षाकालिकमाकाशं 'घनि' घना मेघास्तद्युक्तं-भवति । ७—'चिताम्' शवदाहार्थमुत्तराधरभावेन सन्निवेशितः काष्ठनिचयश्चिता, तां प्रेतयोग्यामाहुः । ८—सुकृतिनः पुमांसः 'वराः' श्रेष्ठा भवन्ति । ९—गगनतलं 'कदम्' कं जलं तद्दं मेघं 'बकम्' बकपक्षिणं च धत्ते । १०—वसन्ते प्लक्षवृक्षो 'दली' दलानि नवपत्राण्यस्य सन्तीति तादृशः सन् चकास्ति । ११—मेघाः 'कम्' जलं मुञ्चन्ति । १२—अरिनिवहे संज्वरः 'दरजः' दराद् भयाज्जातः । १३—'पद्म' आर्द्रलोम नेत्रयोः प्रावरणम् । १४—'लवाः' कणाः अतिशयेन लघवो भवन्ति । १५—'यवः' दीर्घशूको व्रीहिभेदोऽस्ति । १६—वर्षाकालिका दिवसाः 'अञ्जनाभमहावारिवाहौघनिचिताम्बराः' अञ्जनं कज्जलम्,

तदाभास्तत्समानकान्तयः, महान्तो ये वारिवाहानां मेघानाम् ओघाः समूहाः, तैर्निचितं व्याप्तम्, अम्बरम् आकाशं येषु तादृशा भवन्ति, किं च 'कदम्बकन्दलीकन्दरजःपद्मलवायवः' कदम्बानां कन्दलीकन्दानां च रजोभिः परागैः पद्मला मांसलाः पुष्टा वायवो येषु तादृशाश्च भवन्ति ।

श्लोकोत्तरपृष्टस्य द्वितीयमुदाहरणं पूर्ववत् पद्यद्वयेनाह—

**कुर्यादुद्वेगवन्तं कमपि निशि सरः कीदृशं, कास्ति वक्त्रे**
**वक्ता निन्द्यः कया स्यात् परिषदि नियतं, मन्दसम्बोधनं किम्।**
**वर्णोपान्त्यं कमूचुः, किमसुररिपुणा नन्दगोपालयेऽस्तं-**
**कः प्रालेयाद्रिपुत्रीकुचकलशलुठत्पाणिरेणाङ्कमौलिः ॥ ४ ॥**
**कीदृक्कस्येह बन्धुः सुकृतमपहरेत्प्रेयसी का लयान्ते,**
**कीदृग् भीतिं विधत्ते धनुरवनिरुहं कंचिदामन्त्रयस्व।**
**दैत्यः कंसद्विषा कः कथय विनिहतो गद्गदः कः प्रतीतः**
**कीदृक् कीदृग् वसन्तः प्रियतम भवतः प्रीतये नित्यमस्तु ॥५॥**

**कुर्यादिति,** १—कीदृशं सरस्तडागः, निशि कमपि जनम्, कामोद्दीपनेन, उद्वेगवन्तं चलितहृदयं कुर्यात्, २—वक्त्रे मुखे का अस्ति ? ३—परिषदि सभायां वक्ता कया निमित्तभूतया नियतम् अवश्यं निन्द्यो निन्दायोग्यो भवति ? ४—मन्दस्य अलसस्य सम्बोधनं किम् ? ५—वर्णेषु उपान्त्यम् उपान्ते सर्वान्ते भवं चरमं वर्णं कम् ऊचुः बुधाः इतिशेषः ? ६—असुराणां दैत्यानां रिपुणा कृष्णेन, नन्दगोपस्य आलये गृहे किम् अस्तं क्षिप्तम् ? ७—प्रालेयस्य हिमस्य अद्रिः पर्वतो हिमालयः, तस्य पुत्री पार्वती, तस्याः कुचकलशयोः कलशसदृशस्तनयोर्लुठन् पाणिर्हस्तो यस्य तादृशः, एणो मृगः अङ्को लक्ष्म यस्य स एणाङ्कश्चन्द्रमाः, स मौलौ यस्य स च कः ?

**कीदृगिति,** ८—इह कीदृग् बन्धुर्भ्राता कस्य पुरुषस्य अस्ति ? ९—प्रेयसी स्वभर्तुः प्रिया का लयान्ते लयो[१] विलासः संश्लेषो वा तदन्ते, सुकृतं तपः अपहरेद् हृतवतीत्यर्थः ? १०—कीदृग् धनुः भीतिं विधत्ते जनयति ?

---

१—'लयो विलासे संश्लेषे साम्ये तौर्यत्रिकस्य च' इति विश्वः ।

११—कंचिद् अवनिरुहं वृक्षम् आमन्त्रयस्व सम्बोधय ? १२—कंसाद्विषा कंस-दैत्यद्वेषिणा को दैत्यो विनिहतो मारित इति कथय। १३—गद्गदः स्खलितवाक् कः प्रतीतः प्रासिद्धः ? १४—हे प्रियतम ! कीदृक् कीदृक् किंकिविशेषणविशिष्टः, वसन्तः, नित्यं भवत्प्रीतये, अस्तु। आशिषि लोट्।

अत्राप्युत्तरमनुष्टब्वृत्तनाह—

**कोकिलालापवाचालसहकारमनोहरः।**
**अशोकस्तवकालीनमत्तालिमधुरस्वरः॥**

कोकि, लाला, अपवाचा, अलस, हकारम्, अनः, हरः, अशोकः तव, काली, नमत्, तालि, मधुः, अस्वरः, इत्युत्तरपदच्छेदः।

१—कोकाश्चक्रवाकाः सन्त्यस्मिन्निति 'कोकि' सरो जनं कामोद्दीपनेनोद्वेजयेत्। २—मुखे 'लाला' लाल इति भाषायां प्रासिद्धं मुखजलं तिष्ठति। ३—'अपवाचा' अपभाषणेन वक्ता निन्द्यो भवति। ४—हे 'अलस' इति मन्दस्य संबोधनम्। ५—'हकारम्' वर्णमात्रिकायामन्तिमं वर्णमूचुः। ६—असुरद्विषा कृष्णेन नन्दगोपालये 'अनः' शकटं शकटासुर इतियावत्, निक्षिप्तम्। ७—पार्वती-स्तनविमर्दनश्चन्द्रमौलिश्च 'हरः' महादेवोऽस्ति। ८—'अशोकः' शोकरहितो भ्राता 'तव' अस्ति। ९—लयान्ते 'काली' महादेवप्रिया सुकृतमपहरेत्। १०—'नमत्' आरूढप्रत्यञ्चतया संजातोभयाग्रभागनमनं धनुर्मेयं जनयति। ११—हे 'तालि' इति तालीवृक्षसंबोधनम्, 'अम्बार्थनद्योर्ह्रस्वः' इति ह्रस्वः। खर्जूर-वृक्ष एव तालीवृक्ष उच्यते। १२—कंसद्विषा 'मधु' मधुनामा दैत्यो हतः। १३—गद्गदः 'अस्वरः' स्वररहितः। १४—'कोकिलालापवाचालसहकारमनोहरः' कोकिलानाम् आलापेन शब्देन वाचालाः सशब्दाः ये सहकारा आम्रवृक्षाः, तैर्मनोहरा मनोज्ञाः, 'अशोकस्तवकालीनमत्तालिमधुरस्वरः' अशोकस्तबकेषु अशोक-कुसुमगुच्छकेषु, आलीनाः समन्तात् स्थिता ये अलयो भ्रमराः, तेषां मधुरः कर्णसुखदः स्वरो यत्र तादृशश्च वसन्तो भवत्प्रीतयेऽस्तु।

इति श्लोकोत्तर-जातिः

खण्डोत्तरमुदाहरति—

**का चक्रे हरिणा, धने कृपणधीः कीदृग्, भुजङ्गेऽस्ति किं-**
**कीदृक्कुम्भसमुद्भवस्य जठरं कीदृग्यियासुर्वधूः।**
**श्लोकः कीदृगभीप्सितः सुकृतिनां कीदृङ् नभो निर्मलं-**
**क्षोणीमाह्वय सर्वगं किमुदितं रात्रौ सरः कीदृशम् ॥ ६ ॥**

केति, १—हरिणा का चक्रे कृता ? २—धने द्रव्याविषये, कृपणस्य बद्धमुष्टेर्धीर्बुद्धिः, कीदृक् किंविधा ? ३—भुजङ्गे सर्पे किम् अस्ति ? ४—कुम्भसमुद्भवस्य अगस्त्यस्य जठरम् उदरं कीदृक् ? ५—यियासुः श्वशुरालयं प्रति यातुमिच्छुः वधूः कीदृक् ? यियासोरिति पाठे यियासोर्विदेशं यातुकामस्य पुरुषस्य वधूः कीदृगिति प्रश्नयोजना । ६—सुकृतिनां पुण्यवतां विदुषां कवीनां वा अभीप्सित इष्टः श्लोको यशः १ पद्यं वा कीदृक् ? ७—कीदृङ्: नभ आकाशं निर्मलम् ? ८—क्षोणीम् पृथ्वीम् आह्वय सम्बोधय । ९—सर्वगं सर्वव्यापकं किम् उदितं कथितम् ? १०—रात्रौ सरस्तडागः कीदृशम् ? ।

अत्रोत्तरम्—श्लोकार्धेनाह—

**कुमुदवनपरागरञ्जिताम्भो-**
**विहितगमागमकोकमुग्धरेखम् ।**

'कुमुद्' 'अवनपरा' 'गरम्' 'जिताम्भः' 'विहितगमा' 'गमकः' 'अकमुक्' 'धरे' 'खम्' इत्यवान्तरोत्तरपदच्छेदः ।

१—हरिणा 'कुमुद्' कौ पृथिव्यां मुद्-हर्षश्चक्रे । २—धनविषये कृपणस्य धीः 'अवनपरा' अवनं रक्षणं तत्परा भवति । ३—भुजङ्गे 'गरम्' विषं भवति । ४—अगस्त्यस्य जठरम् 'जिताम्भः' जितम् पीतम्, अम्भः समुद्रजलं येन तादृशमस्ति । ५—श्वशुरालयं यियासुर्वधूः 'विहितगमा' विहितः विधिबोधितः, गमः गमनं यस्याः तादृशी भवति । अथवा—यियासोर्वधूः विहितगमा विहितः हितविरुद्धो विप्रिय इति यावत् गमो गमनं (पत्युरितिशेषः) यस्यास्तादृशी भवति । ६—सुकृतिनामिष्टः श्लोकः (यशः पद्यं वा) 'गमकः' यशःपक्षे सर्वत्रगामीत्यर्थः । गमेः पचाद्यजन्तात् स्वार्थे कः । पद्यपक्षे 'गमकः' प्रसादगुणयुक्तत्वाद् झटित्यर्थसमर्पकः । गमयतेर्ण्वुल्, अथवा गमयति ध्वनयति

इति 'गमकः' ध्वनिः। ध्वन्यात्मकश्च श्लोकः कवीनामिष्टः। ७—'अकमुक्' कं जलं मुञ्चतीति कमुग् मेघः, न कमुग् यत्र तद 'अकमुक्' मेघरहितं नभो निर्मलं भवति। ८—हे 'धरे' इति पृथिव्याः सम्बोधनम्। धरा पृथिवी, तत्सम्बुद्धौ 'धरे' इति। ९—'खम्' आकाशं सर्वव्यापकमुच्यते। १०—रात्रौ सरः 'कुमुदवनपरागराञ्जिताम्भः' कुमुदवनस्य कैरवसमूहस्य परागैः धूलिभिः, रञ्जितम् अम्भो-जलं यस्य तादृशं भवति, किं च 'विहितगमागमकोकमुग्धरेखम्' विहितौ गमागमौ यातायाते यया तादृशी कोकमुग्धरेखा कोकानां चक्रवाकदम्पतीनां मुग्धा मनोहरा रेखा पङ्क्तिर्यत्र तादृशं च भवति।

अस्यैव द्वितीयमुदाहरणं यथा—

**मुण्डः पृच्छति किं मुरारिशयनं का हन्ति रूपं नृणां**
**कीदृग् वीरजनश्च कोऽतिगहनः सम्बोधयावञ्चितम्॥**
**का धात्री जगतो बृहस्पतिवधूः कीदृक् कविः क्वादृतः।**
**कोर्थः किं भवता कृतं रिपुकुलं कीदृक् सरो वासरे॥ ७॥**

**मुण्ड इति,** १—मुण्डः केशशून्यशिरस्कःपृच्छति जिज्ञासते यद् मुरारेर्नारायणस्य शयनं शय्या कीदृगस्ति? २—नृणां रूपं सौन्दर्यं का हन्ति? ३—वीरजनः कीदृग् भवति? ४—अतिगहनः अतिदुस्तरः कः? ५—अवञ्चितम् अप्रतारितं पुरुषं सम्बोधय। ६—जगतो धात्री अन्नादिदानेन पोषयित्री, धारयित्री च का? ७—बृहस्पतेर्वधूर्जाया कीदृक्? ८—कविः क कस्मिन् विषय आदृतः प्राप्तादरः? ९—अर्थः कः किंशब्दाभिधेयः? १०—भवता रिपूणां कुलं किं कृतम्? ११—वासरे दिने सरः कीदृक्?

अत्रोत्तरं पद्यार्द्धेनाह—' **विकचवारिजराजिसमुद्भवोच्छलितभूरिपरागविराजितम्**'। विकच, वारि, जरा, आजिसमुद्, भवः, अच्छलित, भूः, इपरा, गवि, रा, जितम्, इत्यवान्तरोत्तरपदच्छेदः।

१—हे 'विकच' विगताः कचाः केशा यस्य तादृश हे मुण्ड 'वारि' जलं मुरारिशयनमस्ति, इति मुण्डं प्रति तत्प्रश्नोत्तरम्। २—'जरा' वार्धक्यं रूपं नाशयति। ३—वीरो जनः 'आजिसमुद्' आजौ संग्रामे समुद् हर्षयुक्तो भवति। ४—'भवः'

---

१—पद्ये यशसि च प्रयोक्तव्यम्।

संसारोतिदुस्तरः। ५—हे 'अच्छलित' इत्यप्रतारितस्य सम्बोधनम्। ६—जगद्धात्री 'भूः' पृथिव्यस्ति। वृहस्पतिवधूः 'इपरा' इः कामः, तत्परा, कामपरायणा, अत एव सा चन्द्रेण सह रेमे इत्यादि पौराणिकं वृत्तमत्रानुसंधेयम्। ८—कविः 'गवि' वाचि वाग्विषये प्राप्तादरः, सरसालङ्कारां गिरमुदीरयन्नेव कविरादरमुपैति। ९—'राः' इति अर्थस्य (धनस्य) नाम। १०—भवता रिपुकुलं 'जितम्' पराभूतम्। ११—दिने सरः 'विकचवारिजराजिसमुद्भवोच्छलितभूरिपरागविराजितम्' विकचा विकसिता वारिजानां कमलानां राजिः समुद्भव उत्पत्तिकारणं यस्य तादृशेन उच्छलितेन उत्पतितेन भूरिणा परागेण पुष्परजसा विराजितं सुशोभितं भवति।

इति खण्डोत्तरजातिः।

पादोत्तरमुदाहरति—

**विभर्ति वदनेन किं क इह सत्त्वपीडाकरं-**
**कुलं भवति कीदृशं गलितयौवनं योषिताम्।**
**बभार हरिरम्बुधेरुपरि कां च केन स्तुतो-**
**हतः कथय कस्त्वया नगपतेर्भयं कीदृशात्॥८॥**

**विभर्तीति,** १—इह सत्त्वानां जीवानां पीडाकरं दुःखदं किं वस्तु कः वदनेन मुखेन विभर्ति धारयति? २—गलितं नष्टं यौवनं तारुण्यं यस्य तादृशं योषितां स्त्रीणां कुलं समूहः कीदृशं भवति? ३—हरिः अम्बुधेः समुद्रस्य, उपरि कां बभार? ४—किं च स एव हरिः केन स्तुतः? ५—त्वया को हत इति कथय, ६—कीदृशाद् नगपतेः पर्वतराजाद् भयं जायते?

अत्र श्लोकपादेनोत्तरमाह—**विषमपादनिकुञ्जगताहितः।** विषम, अपात्, अनि, कुम्, जगता, आहितः, इत्यवान्तरोत्तरपदच्छेदः।

१—सत्त्वपीडाकरं 'विषम्' 'अपात्' पादरहितः सर्पो मुखेन धारयति। २—विगतयौवनं स्त्रीकुलम् 'अनि' इः कामः, स न विद्यते यस्य तादृशं कामरहितं भवति। ३—हरिः समुद्रोपरि 'कुम्' पृथ्वीं बभार वराहावतारे। ४—स एव हरिः 'जगता' स्तुतः। ५—मया 'आहितः' शत्रुर्हतः। ६—'विषमपादनिकुञ्जगताहितः' विषमा दुर्गमाः पादाः* प्रत्यन्तपर्वताः, तेषां निकुञ्जेषु गताः अहितः

*—पादाः प्रत्यन्तपर्वताः, इत्यमरः। महापर्वतसमीपवर्तिनो लघुपर्वता इत्यर्थः।

सर्पा यत्र तादृशान्नगपतेर्भयं जायते । समस्तात् पञ्चम्यास्तसिल् ।

अस्यैव द्वितीयमुदाहरणं यथा—

**हरिर्वहति कां तवास्त्यरिषु का गता कं च का—**
**कमर्चयति रोगवान् धनवती पुरी कीदृशी ।**
**हरिःकमधरद् बलिप्रभृतयो धरां किं व्यधुः,**
**कया सदसि कस्त्वया बुध जितोम्बुधिः कीदृशः ॥९॥**

**हरिरिति,** १—हरिर्नारायणः कां वहति धारयति ? । २—तव अरिषु का गता ? ३—कं प्रति का गता ? ४—रोगवान् रोगी नरः कम् अर्चयति ? ५—धनवती पुरी कीदृशी ? ६—हरिः कम् अधरत् ? ७—बलिप्रभृतयः बलिप्रमुखा धरां पृथ्वीं किं व्यधुः अकार्षुः ? ८—हे बुध त्वया सदसि सभायां कया करणभूतया कः जितः ? ९—अम्बुधिः समुद्रः कीदृशः ?

अत्र वसन्ततिलकापादेनोत्तरमाह—**कुम्भीरमीनमकरागमदुर्गवारिः ।** कुम्, भीः, अम्, ई, इनम्, अकरा, अगम्, अदुः, गवा, अरिः इत्यवान्तरोत्तरपदच्छेदः । १—हरिः 'कुम्' पृथ्वीं धारयति । २—तवारिषु 'भीः' भीतिर्गता । ३—'अम्' विष्णुं प्रति, 'ई' लक्ष्मीर्गता समुद्रमन्थनावसरे । ४—रोगवान् 'इनम्' सूर्यमर्चयति । 'आरोग्यं भास्करादिच्छेत्' इत्याद्यभियुक्तोक्तेः । ५—धनवती पुरी 'अकरा' न करो राजदेयभागो यस्यां सा 'अल्पकरा' इत्यर्थः, नञ्शब्दस्येषदर्थकत्वात् । ६—हरिः 'अगम्' गोवर्धनागिरिम् अधरत् । ७—बलिप्रभृतयो धराम् 'अदुः' परस्मै दत्तवन्तः, वामनावतारे दैत्यराजो बली वामनाय पृथ्वीं ददौ, परशुरामोऽप्येकविंशतिकृत्वः पृथ्वीं जित्वा कश्यपाय ददौ । ८—त्वया सदसि 'गवा' तर्कोपस्कृतया वाचा 'अरिः' प्रतिपक्षी जितः । ९—अम्बुधिः 'कुम्भीरमीनमकरागमदुर्गवारिः' कुम्भीरा नक्राः, मीना मत्स्याः, मकराः जलजन्तुविशेषाः, एतेषामागमेन सन्निधानेन दुर्गं दुष्प्रवेशं वारि जलं यस्य तादृशोऽस्ति ।

इति पादोत्तरजातिः

इदानीं चक्रप्रश्नं लक्षयति—

**चत्वार्यराणि पादाभ्यां नेमिं पादद्वयेन च ।**
**लिखित्वा दक्षिणावर्तं चक्रं प्रश्नमवेहि मे ॥ १० ॥**

**चत्वारीति,** उत्तरश्लोकस्य पादाभ्यां प्रथमद्वितीयपादाभ्यां चत्वारि अराणि शङ्कून्, पादद्वयेन तृतीयेन चतुर्थेन च पादेन नेमिं प्रधिं चक्रस्य गोलाकारं भूमिस्पर्शिभागं दक्षिणावर्तं दक्षिणक्रमेण लिखित्वा मे मम चक्रं प्रश्नमवेहि जानीहि । अयं स्पष्टो भावः-यत्प्रश्नस्योत्तरं चक्रबन्धात्मकं पद्यं भवति स चक्रप्रश्न उच्यते। इदं च अत्र विशेषतोऽवधेयं यच्चक्रस्य चतुर्ष्वरेषु पूर्वार्धाक्षराणि, नेमौ चोत्तरार्धाक्षराणि दक्षिणावर्तेन विन्यसनीयानि ।

तत्र पूर्वं द्वाभ्यां चक्रप्रश्नमुपन्यस्यति—

**कं चौरस्य छिनत्ति क्षितिपतिरनघः किं पदं वक्ति कुत्सां-**
**क्षोणीसम्बोधनं किं वदति कमलभूः का च विश्वं बिभर्ति ।**
**चक्राङ्गामन्त्रणं किं कथमपि सुजनः किं न कुर्यादनार्यं-**
**कीदृग् भोक्तुः पुरं स्यात् पयसि वद कुतो मीनपङ्क्तिर्बिभेति॥१॥**
**किं स्वच्छं शारदं स्याद् वदति वृषगतिः कोंऽशुमाली, पवित्रः**
**कोऽस्मिन् किं जीवनं, का विरचयति कविर्वह्निसंबोधनं किम्।**
**नाकाङ्क्षन्ति स्त्रियः कं, तनुरसुररिपोः कीदृशी कश्च मूकः**
**सम्यक् प्रीतिं तडागः प्रियतम तनुते कीदृशः कीदृशस्ते ॥१२॥**

**कमिति,** १—अनघः अघः पापं तद्रहितः, क्षितिपतिः नरपतिः, कं छिनत्ति? २—किं कतमत् पदं कुत्सां निन्दां वदति, निन्दार्थकं भवतीत्यर्थः। ४—क्षोण्याः पृथिव्याः सम्बोधनं किम्? ४—कमलभूः ब्रह्मा वदति पृच्छति यद् विश्वं का बिभर्ति? ५—चक्राङ्गस्य चक्रावयववाचकस्य आमन्त्रणं सम्बोधनं सम्बुद्धिविभक्त्यन्तं रूपं किम्? ६—सुजनः कथमपि केनापि प्रकारेण किम् अनार्यम् अश्रेष्ठं कर्म न कुर्यात्? ७—भोक्तुर्विषयभोगासक्तस्य नृपतेः पुरं कीदृग्? ८—पयसि जले मीनपङ्क्तिः कुतः कस्माद् वस्तुनः, बिभेति?

**किमिति,** ९—शारदं शरदि भवं किं वस्तु स्वच्छं स्यात्? १०—वृषगतिः वृषेण वृषभेण गतिर्गमनं यस्य स शिवः वदति पृच्छति यद् अंशुमाली अंशूनां किरणानां माला विद्यते यस्य स कः पदार्थः? ११—अस्मिन् जगति पवित्रः कः? १२—तथा जीवनं जीवनकारणं किम्? १३—कविः का विरचयति? १४—वन्हेः किं सम्बोधनम्? १५—स्त्रियः कं न आकांक्षन्ति

वाञ्छन्ति ? असुररिपोर्नारायणस्य तनुः शरीरं कीदृशी ? १७—मूको वागिन्द्रिय-वर्जितः कः ? १८—हे प्रियतम ! कीदृशः कीदृशः केन केन विशेषणेन विशिष्टस्तडागः ते तव सम्यक् प्रीतिं तनुते ?

अत्रोत्तरम्—

**करङ्कुकोककुररकलहंसकरान्वितः ।**
**सरोजकोमलोद्गारनीरसंसक्तमारुतः ॥**

करम्, कु, को, क, कुः, अर, कलहम्, सकरम्, वितः, सरः, अजः, कः अमलः, अत्, गाः, र, नीरसम्, सक्तमा, अरुतः, इत्यवान्तरोत्तरपदच्छेदः ।

१—नृपतिश्चौरस्य 'करम्' हस्तं छिनत्ति । २—'कु' इति कुत्सार्थकं पदम् । ३—'को' इति पृथिवीवाचकस्य कुशब्दस्य सम्बोधनम् । ४—हे 'क'[१] हे ब्रह्मन् ! 'कुः' पृथिवी विश्वं बिभर्ति, इति ब्रह्माणं प्रति तत्प्रश्नोत्तरम् ? ५—हे 'अर' इति चक्राङ्गस्य सम्बोधनम्, चक्रमध्यवर्तिनीं नाभिं परितो निखाताः शङ्कवः अरशब्देनाभिधीयन्ते । ६—सुजनः कथमपि 'कलहं' न कुर्यात् । ७—भोगिनो नृपतेः पुरं 'सकरम्' आवश्यकाधिककरसहितमित्यर्थः, भोगस्य-प्रभूतार्थायत्तत्वाद्, प्रभूतार्थप्राप्तिः प्रभूतकरग्रहणादेव । ८—पयसि मीनपङ्क्तिः 'वितः' बकादिपक्षितो बिभेति । ९—शारदं 'सरः' स्वच्छं स्यात् । १०—हे 'अज !' अजन्मन् शिव ! 'कः' सूर्यः किरणमाली विद्यते । ११—जगति 'अमलः' मलरहितः पवित्रः । १२—'अत्' अद्यते भुज्यत इति अद् अन्नं जीवन-कारणम् । १३—कविः 'गाः' काव्यात्मिका वाणीर्विरचयति । ४—हे 'र !' हे वन्हे इति वन्हिसम्बोधनम् । १५—स्त्रियः 'नीरसम्' अनुरागरहितं रसो-वीर्यं तद्रहितं षण्ढं वा नरं नेच्छन्ति । १६—असुररिपोः 'तनुः' 'सक्तमा, सक्ता संश्लिष्टा मा लक्ष्मीर्यत्र तादृशी लक्ष्म्यालिङ्गितास्ति । १७—मूकः 'अरुतः' न विद्यते रुतं शब्दो यस्य तादृशः शब्दोच्चारणरहितो भवति । १८—'करङ्कुकोककु-ररकलहंसकरान्वितः' करङ्कुभिः पक्षिविशेषैः, कोकैः चक्रवाकैः, कुररैः 'क्रौञ्चैः' कलहंसैश्च करम्बितः परिवृतः, किं च 'सरोजकोमलोद्गारनीरसंसक्तमारुतः' सरोजानां कमलानां यः कोमलोद्गारः सौरभोद्वमनं तेन, नीरेण च संसक्तो युक्तः

१—को ब्रह्मणि समीरात्मयमदक्षेषु भास्करे—इति मेदिनी ।

सुगन्धः शीतलश्च वायुर्यत्र तादृशश्च तडागः प्रीतिमुत्पादयति । विकसितानि कमलानि सौरभमुद्गिरन्ति, तेन च सम्पृक्तो वायुरपि सुरभिर्जायते ।

एतदुत्तरपद्यं चक्रबन्धात्मकं भवति—

एतद्विन्यासप्रकारश्चायम्—पूर्वं चतुररं मध्ये नाभिविशिष्टं चक्रं लेखनीयम् । प्रथमाक्षरं नाभौ सन्निवेशयेत्, द्वितीयं तृतीयं चतुर्थं च निर्गमक्रमेणोत्तरारे सन्निवेशयेत्, पञ्चमाक्षरं नाभा प्रथमवर्णेन श्लिष्टम्, षष्ठं सप्तमम् अष्टमं च पूर्वदिगरे निर्गमक्रमेण विन्यसेद् नवमं च नाभिवर्णेन श्लिष्टम्, दशमम् एकादशं द्वादशं च दक्षिणदिगरे पूर्ववन् निर्गमक्रमेण विलिखेत्, त्रयोदशं नाभिवर्णेन श्लिष्टं चतुर्दशं पञ्चदशं षोडशं च पाश्चिमदिगरे निर्गमक्रमेण न्यसेत् । इत्थं पूर्वार्धगतानि षोडशाक्षराणि चतुर्ष्वरेषु संस्थाप्य, उत्तरार्धाक्षराणि क्रमशः पश्चिमतो दक्षिणावर्तेन नेमौ सन्निवेशयेत्, तत्र चतुर्थाष्टमद्वादशषोडशानि अक्षराणि चतुर्थाष्टद्वादशषोडशैररवर्णैः संश्लिष्टानि । बन्धचित्रं तु पुस्तकान्ते विलोक्यम् ।

इति चक्रप्रश्नजातिः ।

पद्मोत्तरजातिं लक्षयति—

**वर्णद्वयद्वयैकैकदलभूतदलाष्टकम् ।**
**सर्वोत्तराद्यवर्णेन पद्मं स्यात् कृतकर्णिकम् ॥ १३ ॥**

**वर्णेति,** वर्णयोर्द्वयं द्वयं द्वौ द्वौ वर्णौ विन्यस्यमानौ एकैकं दलभूतं पृथग् दलाकारमुपगतं यत्र तथाभूतं दलाष्टकम् अष्टदलात्मकम्, अथवा वर्णयोर्द्वयेन द्वे जातं यद् एकैकं पृथक् पृथग् दलं तेन भूतमुत्पन्नं दलानाम् अष्टकं यस्य तादृशम्, सर्वेषामुत्तराणाम् आद्यवर्णेन कृता कर्णिका मध्यवर्ती बीजकोशः यस्य तादृशं चोत्तरं पद्माकारोल्लासकत्वात् पद्ममुच्यते । यस्य च प्रश्नस्य पद्ममुत्तरं सोऽपि पद्मविषयकत्वात् पद्मशब्दाभिधेयः । तत्र युग्मेन पद्मप्रश्नमाह—

**पुण्यात्मा वद कीदृशः सरसिजैः के मोदिताः कीदृश-**
**स्त्वद्वैरी गतचक्षुषां कुलमभूत् कीदृक् त्वया के जिताः ।**
**बद्धालिः सलिलाशयः कथय भोः कीदृक् क आक्षेपवाक्**
**शब्दः, कुत्र न तस्करादिकभयं दक्षे भवेत् प्रायशः ॥ १४ ॥**

**अप्पित्तं वद कीदृशं निगदितो मुक्तः पुमान् कीदृशः**
**कस्माद् बिभ्यति कौशिका भुवि कृतः कीदृक् त्वया तस्करः।**
**हस्ती स्यान्ननु कीदृशो बहुमदः शोच्यो रणः कीदृशः।**
**कीदृक्तः पुरुषः पराप्रतिहतः कीदृग् भवेद् वासुकिः ॥ १५ ॥**

**पुण्यात्मेति,** १—पुण्यात्मा कीदृशो भवति इति वद, २—सरसिजैः के मोदिता हर्षिताः ? ३—तव वैरी कीदृशः ? ४—गतानि नष्टानि चक्षूंषि येषां तेषामन्धानां कुलं समूहः कीदृक् ? ५—त्वया के जिताः ? ६—भोः सुहृद् ! बद्धा रचिता आलिः * सेतुर्यत्र स सलिलाशयः कीदृक् ? ७—आक्षेपवाक् तिरस्कारद्योतकः, शब्दः कः ? ८—कुत्र कस्मिन् वस्तुनि दत्ते योजिते प्रायो बाहुल्येन तस्करादिभ्यः चौरादिभ्यो भयं न भवेत् ।

**अप्पित्तमिति,** ९—अपां पित्तमप्पित्तं बाडवाग्निः कीदृशम् ? इति वद १०—मुक्तः बन्धनान्मोक्षं प्राप्तः पुमान् कीदृशो निगदितः कथितः ? ११—कौशिका उलूकाः कस्माद् बिभ्यति भयं प्राप्नुवन्ति ? १२—भुवि पृथिव्यां त्वया तस्करश्चौरः कीदृक् कृतः ? १३—ननु कीदृशो हस्ती गजः बहुः अधिकः,मदः दानजलं यस्य तादृशः स्यात् ? १४—शोच्यः शोचनीयो रणः संग्रामः कीदृशः ? १५—परैः शत्रुभिः, अप्रतिहतः अनभिभूतः पुरुषः कीदृशः ? १६—वासुकिः सर्पराजः कीदृग् भवेत् ?

अत्रोत्तरम्—**अलयः, अपश्यत्, अरयः, अरेर, अबन्धः, अहस्तः, अगजः, अहीनः**। एष्वेकैकं द्वयोर्द्वयोः प्रश्नयोरुत्तरम् ।

१—पुण्यात्मा 'अलयः' अः वासुदेवः, तत्र लयो ध्यानं यस्य तादृशो भवति । २—सरसिजैः 'अलयः' भ्रमरा मोदिताः । अलिशब्दस्य बहुवचनम् । ३—मम वैरी 'अपश्यत्' शयनं 'शीः' शीङ् धातोः भावे क्विप्, अदनम् 'अत्' अत्रापि अद् धातोर्भावे क्विप्, शीश्च, अच्च अनयोः समाहारः 'श्यत्' अपगतं श्यत् (शयनं भोजनं च ) यस्य सः 'अपश्यत्' शयनभोजनरहितः अस्ति । भयाक्रान्तत्वाद् न निद्रां लभते, न च भोजनं रोचयति । ४—अन्धानां कुलम् 'अपश्यत्' अनीक्षमाणम् अस्ति । पश्यतेः शत्रन्तस्य नञा सह समासः । सोर्ङका लुप्तत्वान्नुमभावः । ५—मया 'अरयः' शत्रवो जिताः। ६—बद्धसेतुर्जलाशयः'अरयः'रयो वेगस्तच्छून्यो

*—आलिः पङ्क्तौ च संख्या च सेतौ च परिकीर्तिता—इति विश्वः।

भवति । ७—तिरस्कारद्योतकः शब्दः 'अरेरे' इति, 'रे' 'अररे' इत्यादयो सं-मन्त्रणे निपाताः । ८—'अररे' कपाटे दत्ते ( संयोजिते ) तस्करादिभयं न भवति । ९—अप्पित्तं वाडवाग्निः 'अवन्धः ' आपो जलानिः अन्धः अन्नम् प्रदीपकं तादृशम् । वाडवाग्निरद्भिरेव दीप्यते । सोर्लुका लुप्तत्वेन अत्वसन्तस्येति दीर्घः । १०—मुक्तः पुमान् 'अवन्धः' वन्धराहित उच्यते । ११—'उलूकाः' दिवान्धाः 'अहस्तः' दिनाद् बिभ्यति, अहन् शब्दात् तसिल् , " अहन् " इति नस्य तस्य विसर्गसत्वे । १२—त्वया तस्करः 'अहस्तः' हस्तराहितःकृतः । १३-'अगजः' अगाः पर्वताः, तज्जो हस्ती वहुमदो भवति । १४—'अगजः' गजहीनो राजा शोचनीयो भवति । १५—'अहीनः' न हीनः शक्तिमान् परैर्न प्रतिहन्यते । १६—वासुकिः 'अहीनः' अहीनां सर्पाणाम् 'इनः' स्वामी भवति ।

इमान्युत्तराक्षराणि यथायथं सन्निवेश्यमानानि पद्माकारमुल्लासयन्ति, अतः पद्मबन्धात्मकमुत्तरामिदम्, तच्चित्रं अक्षरनिवेशनप्रकारश्च पुस्तकान्ते विलोक्यः ।

अथैकेन काकपदं गोमूत्रीं च लक्षयति—

**काकस्येव पदं त्र्यस्रं यत् तत् काकपदं मतम् ।**
**तिर्यगन्योन्यरेखाभिर्गोमूत्री द्विपदी भवेत् ॥ १६ ॥**

**काकस्येति**, यदुत्तराक्षराणि सन्निवेश्यमानानि त्र्यस्रं त्रयोऽस्राः कोणा यस्य तादृशं काकस्य पदमिव भवन्ति काकपदाकारतां भजन्ते, तत् काकपदं नाम पृष्टं गोमूत्रीपृष्टं लक्षयति **तिर्यगिति**—तिरश्चीभिर्वक्राभिः अन्योन्यस्या दं पातिनीभी रेखाभिः, द्विपदी द्वौ पादौ यस्यां सा द्विपदी श्लोकार्धात्मिका गोमूत्री भवेत् । अयं भावः—यदुत्तराक्षराणि विन्यस्यमानानि—उच्चावचगत्या पदशमानं तिर्यगन्योन्यसंपातिरेखात्मकं गोमूत्राकारमुल्लासयन्ति, तद् गोमूत्रीपृष्टमुच्यते । द्विपदी-त्यनेन श्लोकार्धगोमूत्रिकैवात्राभिप्रेता । लक्षणं विन्यासप्रकारं च उदाहरणप्रसङ्गे दर्श-यिष्यामः । क्रमश उदाहरति, तत्र काकपदपृष्टं यथा—

**कुतः कः स्यात् कीदृक्कथय विषवैद्य ! स्फुटमिदं**
**रिपोः कः कीदृक्षो भवति वशगः कश्च कलभः ।**

---

१—कपाटमररं तुल्ये इत्यमरः ।
२—'अग-कोणे शिखिनि' इति विश्वः ।

**प्रवीणः संबोध्यः, सुभग ! वद कौ रत्नवचनौ**
**सुरूपेति ख्यातिं जगति महतीं का गतवती ॥ ६७॥**

कुत इति, १—हे विषवैद्य ! हे विषचिकित्सक ! कुतः कस्मात् कारणात् कः कीदृक् स्यात् ? इतीदं स्फुटं कथय। २—कः कीदृशः रिपोर्वशगः अधीनः भवति ? ३—कलभः कः भवति ? ४—प्रवीणः चतुरपुरुषः संबोध्यः सम्बुद्धिविभक्त्यन्तेन पदेनाह्वातव्यः। ५—हे सुभग ! रत्नवचनौ कौ रत्नद्वयवाचि द्विवचनान्तं पदं किमिति, वद। ६—'सुरूपा' इयं प्रशस्तसौन्दर्या इति महतीं ख्यातिं प्रसिद्धिं का गतवती ?

अत्रोत्तराणि—**नागदरतः, नागतनयः, नागरमणी।**

१—'नागदरतः' नागेभ्यः सर्पेभ्यो यो दरः भयं तस्मात्, कारणात् 'ना' पुरुषः, 'अगदरतः'[1] औषधरतः स्यात्, अन्यथा कुतस्तस्य नागभयं निवर्तेत। अत्र 'नागदरतः' इति वर्णसमुदाये 'कुतः कः कीदृक्' इतिप्रथमपादोक्तप्रश्नत्रितयस्याप्युत्तराणि संकीर्णानि। तत्र प्रथमोत्तरं समासेन, द्वितीयमुत्तरद्वयं च व्यासेन। २—'ना' पुरुषः 'गतनयः' गतो नयो यस्य स नीतिरहितः सन् रिपोरधीनो भवति। ३—'नागतनयः' नागस्य हस्तिनः, तनयः सुतः, कलभ[2] इत्युच्यते। अत्रापि पूर्ववद् उत्तरत्रितयसङ्करः। ४—हे 'नागर' इतिप्रवीणसंबोधनम्, 'मणी' इति रत्नद्वयवाचि पदम्, द्वितीयान्तत्वात्। ५—'नागरमणी' नागानां रमणी स्त्री सुरूपा भवति, नागकन्यानां सौन्दर्यं पुराणपाठिनां नाविदितम्। इमानि चोत्तराक्षराणि यथायथं सन्निवेश्यमानानि काकपदाकृतिमुद्भावयन्ति। तत्र जत्वाक्षरे श्लिष्टे वेदितव्ये। चित्रं पुस्तकान्ते निरीक्षणीयम्।

इति काकपदजातिः।

अथ युग्मेन गोमूत्रीमुदाहरति—

**कामाद्युवतीममङ्गलवती कीदृग् ग्रहाणां गतिः**
**संबोध्या, वद मत्स्यवेधनधरः कीदृग् भवेत् पामरः।**

---

१—'अगदो जायुरित्यपि' इत्यौषधनामस्वमरः।

२—कलभः करिशावकः इत्यमरः।

कीदृग् बाल्मीकिवेश्म (?) कोऽस्तनमुरो धत्ते, सुरैरुच्यते
गीः कीदृङ् न कदापि कम्बुरहितं वाच्छन्ति कं योषितः ॥
कीदृक् पान्थकुलं तमो हरति का, किं चक्रसंबोधनम्,
रम्या चम्पकशाखिनः कथय का कश्चाटजर्थे भवेत्।
किं क्षिप्तं मुरवैरिणासुररिपोः काह्वा श्मशानेऽस्ति का
क्षमा कीदृग् भवति स्म पूर्वमधुना कीदृक् पुनर्वर्तते ॥ १६ ॥

**कामिति**, १—युवतीं यौवनवतीं काम् आहुः कथयन्ति ? २—अमङ्गलम् अभद्रम्, तद्वती कीदृग् भवति ? ३—ग्रहाणां सूर्यादीनां गतिश्चारः, संबोधनीया। अथवा अमङ्गलवती ग्रहाणां गतिः कीदृक् कथं केन पदेनेत्यर्थः संबोध इत्येक एव द्वितीयप्रश्नो योजनीयः। ४—मत्स्यानां मीनानां वेधनधरः वेधनस्य वे साधनस्य, वडिशादेः, धरः धारकः, पामरो नीचः कीदृग् भवेत्? ५—वाल्मीकेः आश्रमः कीदृग् आसीत् ? ६—अस्तनमुरः कः धत्ते धारयति ? ७—सुरैः गीर्वाणी, उच्यते ? ८—योषितः स्त्रियः कम्बुरहितं कं कदापि न वाञ्छन्ति

**कीदृगिति**, ९—पान्थानां कुलं कीदृग् भवति ? १०—तमोऽन्धकारं का हरति ११—चक्रस्य संबोधनं किम् ? १२—चम्पकशाखिनः चम्पकवृक्षस्य सम्बन्धि का रम्या रमणीया ? इति कथय । १३—आटचः आटच्प्रत्ययस्यार्थे कोऽ प्रत्ययो भवेत् ? १४—मुरवैरिणा कृष्णेन किं क्षिप्तम् ? १५—असुररिपोः नयणस्य का आह्वा किम् आह्वानं सम्बोधनमित्यर्थः ? १६—श्मशाने शवस्थाने का अस्ति ? १७—पूर्वं क्षमा पृथिवी कीदृग् भवति स्म ? १८—अ अस्मिन् समये पुनः कीदृग् वर्तते ?

अत्रोत्तरम्—

अजरामशुभाचारवलिशीलविनोदिता
भुजङ्गमनिभासारकलिकालजनोचिता।

१—युवतीम् 'अजराम्' अवृद्धां कथयन्ति। २—'अशुभा' अमङ्गलवती भ ३—हे 'चार'! इति ग्रहगतिसम्बोधनम्, ज्योतिश्शास्त्रे चारशब्दो ग्रहाणां प्रसिद्धः। पक्षान्तरे हे 'अशुभाचारः' इत्युत्तरम्, अत्र पक्षे-आचार इति ग्रहगति कम्। ४—मत्स्यवेधनधरः 'बलिशी' बलिशो भवति बडिशो मत्स्यवेधनम्,

स्यास्तीति, वडिशधारक इत्यर्थः । काव्यमार्गे बवयोर्डलयोश्चाभेदः । मत्स्यमाराः खलु अतिलम्बमानाया वेणुयष्ट्या अग्रे सूत्रेण वडिशं संयोज्य जले पातयन्ति, भक्ष्यलोलुपा मत्स्या भक्ष्याशया मुखेन तदुपाददते, ततश्च तदग्रवर्तिकण्टकविद्धाः सन्तः प्राणान् संत्यजन्ति । ५—वाल्मीकिमुनेर्वेश्म 'लवि'लवः भगवद्रामचन्द्रपुत्रः, सोऽस्त्यस्मिन्निति तादृशं भवति । श्रीरामेण प्रवासिता सीता वने वाल्मीकिमुनेराश्रमे कुशलवौ सुतौ प्राजीजनत् इति रामायणीयं वृत्तम् । ६—अस्त्रनम् उरः 'ना' नरः धत्ते । सुरैः 'उदिता' उदयवती सुसंस्कृता गीरुच्यते । ८—योषितः वलयरहितं 'भुजम्' कदापि नेच्छन्ति । ९—पान्थकुलं 'गमनि' सर्वदा गमनयुक्तं भवति । गमनशब्दाद् मत्वर्थीय इनिः । १०—'भाः' कान्तिः तमो हरति । ११—हे 'सार' इति चक्रसंबोधनम्, अरैः सह वर्तते इति सारम्, सम्बोधने मलोपः । १२—चम्पकवृक्षस्य 'कालिका' कुड्मलं रम्या । १३—आटच्प्रत्ययार्थे 'आलच्' प्रत्ययो भवति, तदुक्तम् "आलजाटचौ बहुभाषिणि" इति । १४—मुरारिणा 'अनः' शकटम्, शकटासुर इति यावत्, क्षिप्तम् । १५—हे 'अ' इति विष्णोः सम्बोधनम् । १६—श्मशाने 'चिता' शवदाहार्थं काष्ठ-निचयो भवति । १७—पूर्वं पृथ्वी 'अजरामशुभाचारवलीशीलविनोदिता' अजस्य अजनामकस्य दशरथपितुः, रामस्य दशरथपुत्रस्य च शुभेनाचारेण, वलेः वलि-नाम्नो दैत्यराजस्य शीलेन च विनोदिता हर्षवती, आसीत्, इदानीं तु 'भुजङ्गमनिभा-सारकलिकालजनोचिता' भुजङ्गमनिभाः कुटिला असारा साररहिता ये कलिकालस्य कलियुगस्य जनाः, तदुचिता तद्योग्या, अस्ति ।

इदं चोत्तरं गोमूत्रिकाबन्धात्मकम् । तल्लक्षणं यथा—

**वर्णानामेकरूपत्वं यद्येकान्तरमर्धयोः**
**गोमूत्रिकेति तत् प्राहुर्दुष्करं तद्विदो विदुः ॥**

**अयमर्थः**, यदि, अर्धयोः पूर्वार्धोत्तरार्धयोः, वर्णानाम्, एकान्तरम् एका-क्षरव्यवहितं मध्य एकैकाक्षरवर्जनपुरस्सरम् एकरूपत्वमभिन्नाकारत्वं भवेत्, तत् तद्-विदश्चित्रविदः, गोमूत्रिकेति चलद्गवमूत्रधाराकारत्वेन गोमूत्रिकासंज्ञं प्राहुः, तच्च दुष्करमितरबन्धापेक्षया कठिनं, विदुः ।

तदुक्तं सरस्वतीकण्ठाभरणे—

**गतिरुच्चावचा यत्र मार्गे मूत्रस्य गोरिव ।**

गोमूत्रिकेति तत् प्राहुर्दुष्करं चित्रवेदिनः ॥

गोमूत्रस्य प्रकार इति गोमूत्रिका, स्थूलादित्वात् कन् । सा च पादगोमूत्रिकादिभेदेन बहुविधा । अत्र तु श्लोकार्धगोमूत्रिकैव विवक्षितेति प्रागुक्तम् । यत्रैकान्तरितोत्तरार्धवर्णाः तादृशपूर्वार्धवर्णैः समानाः सा हि श्लोकार्धगोमूत्रिका । तच्चित्रं च पुस्तकान्ते विलोक्यम् ।

इति गोमूत्रिकाजातिः ।

सर्वतोभद्रपृष्टं लक्षयति

वर्णैनैकेन च द्वाभ्यां सर्वैर्वा सर्वदिग्गतैः ।
उत्तरैः सर्वतोभद्रं दुष्करं तदिदं यथा ॥ २० ॥

वर्णेनेति, एकेन वर्णेन, द्वाभ्यां वा वर्णाभ्यां सर्वदिग्गतैः सर्वैर्वा वर्णैः अनुलोमप्रतिलोमपाठेन यत्रोत्तरं फलति तत् सर्वतः पाठेनाभिलषितार्थप्रतिपादकत्वात् भद्रं कल्याणमिति सर्वतोभद्रं पृष्टमुच्यते । तदिदमतिकठिनम् । यथेत्युदाहरणनिर्देशः । अथोदाहरति—

कस्त्यागे धातुरुक्तस्तव रिपुहृदि का, भूषणं के स्तनानां-
को दुःखी कश्च नादो वदति वद शुचं कावहेः ख्यातशत्रू ।
शृङ्गारी कीदृशः का रणशिरसि भयाद् भङ्गमाप्नोति सेना
को दानार्थाभिधायी वद शिरसि च कौ युध्यतः संप्रहृत्य ॥२१॥
कीदृक् तोयार्थिनी स्त्री भवति, मदकरः प्रायशः को दुराढ्ये
कस्मिन् मन्दायतेऽसौ नियतमुडुपतिः प्रेयसी का मुरारेः ।
विख्यातौ वाहनौ कौ द्रुहिणमुरभिदोः कीदृगाखेटकर्त्री
कीदृङ् नैवाचिराभा समिति गतभयाः के गतौ कश्च धातुः॥२२॥

क इति, १—त्यागे त्यागार्थे को धातुः ? २—तव रिपोर्हृदि का ? ३—स्तनानां भूषणं के पदार्थाः ? ४—दुःखी कः कीदृशः ? कः नादः शब्दः शुचं शोकं वदति-इति वद । ६—अहेः सर्पस्य ख्यातौ प्रसिद्धौ शत्रू कौ ? ७—शृङ्गारी शृङ्गाररसप्रियः कीदृशः ? ८—का सेना रणशिरसि संग्रामभूमौ भयाद् भङ्गं पराजयं प्राप्नोति ? ९—दानार्थाभिधायी दानार्थवाची कः धातुरस्ति ? १०—कौ प्राणिनौ शिरसि प्रहृत्य अन्योन्यशिरःप्रतिघातपूर्वकं युध्यतः युधमिच्छतः, युद्धं

कुरुत इति वा। अनुदात्तेत्त्वलक्षणस्यात्मनेपदस्यानित्यत्वात् परस्मैपदम्।

**कीदृगिति,** ११—तोयार्थिनी जलाभिलाषिणी स्त्री कीदृग् भवति? १२—दुराढ्ये दुष्टधनिके प्रायशो बाहुल्येन कः पदार्थो मदकरो गर्वोत्पादकः? १३—असौ उडूनां ताराणां पतिः चन्द्रमाः कस्मिन् सति नियतमवश्यं मन्दायते हीनप्रभो भवति? १४—मुरारेः श्रीकृष्णस्य प्रेयसी प्रियतरा का? १५—द्रुहिणस्य ब्रह्मणः, मुरभिदो नारायणस्य च विख्यातौ वाहनौ कौ? १६—आखेटकस्य व्याधस्य स्त्री कीदृग्? १७—अचिराभा विद्युत् कीदृग् नैव भवति? १८—समिति संग्रामे गतभया भीतिरहिताः के भवन्ति? १९—गतौ गत्यर्थे को धातुः?

अत्रोत्तरम्—**हारावी**। १—'हा' धातुस्त्यागार्थकः, 'ओहाक्' त्यागे इति पाणिनीयधातुपाठः। २—शत्रोर्हृदि 'आरा' चर्मभेदनशस्त्रं तज्जन्यदुःखसदृशं दुःखमिह लक्षणया विवक्षितम्। ३—स्तनानां भूषणं 'हाराः' मौक्तिकमालाः।४—दुःखी 'अहावी' न विद्यते 'हावः' प्रसन्नमनस्सु जनेषु प्रतीयमानश्चेष्टाविशेषो यस्य तादृशो भवति। ५—'हा' इति नादः शोकसूचकः। ६—विश्व, विश्व 'वी' गरुडमयूरौ सर्पस्य शत्रू भवतः। ७—शृङ्गारी 'हावी' हाववान् भवति, हाव उक्तः। ८—'अवीरा' सेना भङ्गं प्राप्नोति। ९—'रा' इति दानार्थो धातुः। १०—'अवी' मेषौ शिरसा युध्येते। ११—तोयार्थिनी स्त्री 'अवीहा' अप्सु जलविषये ईहा प्रयत्नो यस्यास्तादृशी भवति। वबयोरभेदः।

१२—दुराढ्ये 'राः' धनं मदोत्पादकः। १३—चन्द्रमाः 'राहौ' भूमिच्छायायां सत्यां मन्दायते। १४—'ई' लक्ष्मीः मुरारिप्रिया। १५—'वी' गरुडहंसौ विष्णुब्रह्मणोर्वाहनौ। १६—आखेटकस्त्री 'वीहा' भवति, विषु पक्षिषु ईहा यस्यास्तादृशीत्यर्थः। १७—विद्युत् 'वीरा' विगता इरा उदकं यस्यास्तादृशी न भवति, तस्या अबिन्धनत्वात्। १८—संग्रामे निर्भयाः 'वीराः' भवन्ति। गत्यर्थो धातुः 'हा' इति। 'ओहाङ् गतौ' इति जुहोत्यादौ। अस्यापि चित्रन्यासप्रकारश्च पुस्तकान्ते निरीक्षणीयम्।

इति सर्वतोभद्रजातिः।

अथ गतागतं लक्षयति,

**प्रतिलोमानुलोमाभ्यामुत्तरेण गतागतम् ।**
**मध्यवर्णविलोपेन तच्चानेकप्रकारकम् ॥ २३ ॥**

**प्रतिलोमेति,** यत्रोत्तराक्षरसमुदायस्य प्रतिलोमपाठेन, अनुलोमपाठेन चोत्तरं फलति तद् गतागतं पृष्टमुच्यते । तच्च प्रतिलोमानुलोमाभ्यां पाठेन मध्यवर्ण-त्यागेन चानेकप्रकारं भवति ।

तत्र पूर्वं यत्र न मध्यमवर्णत्यागस्तथोदाहरति—

**वद वल्लभ सर्वत्र साधुर्भवति कीदृशः ।**
**गोविन्देनानसि क्षिप्ते नन्दवेश्मनि काभवत् ॥२४॥**

**वदेति,** हे वल्लभ हे प्रिय ! सर्वत्र साधुः कीदृशो भवति ? इति वद । गोविन्देन कृष्णेन अनसि शकटासुरे क्षिप्ते सति का अभवत् ?

अत्रोत्तरम्—**दीनरक्षी** । अस्य अनुलोमपाठेन 'दीनानां रक्षी' पालक इति प्रथमप्रश्नोत्तरं फलति । प्रतिलोमपाठेन च क्षीरस्य दुग्धस्य नदी 'क्षीरनदी' इति द्वितीयप्रश्नोत्तरं फलति । अत्र न मध्यवर्णत्यागः ।

अस्यैव द्वितीयं यथा—

**यत्नादन्विष्य का ग्राह्या लेखकैर्मसिमालिका ।**
**घनान्धकारे निःशङ्कं मोदते केन बन्धकी ॥ २५ ॥**

**यत्नादिति,** लेखकै र्यत्नाद् अन्विष्य गवेषणां कृत्वा का कीदृशी मासिमालिका मस्याधानी ग्राह्या ग्रहीतव्या ? बन्धकी कुलटा स्त्री घनान्धकारे निःशङ्कं केन हेतुना मोदते ?

अत्रोत्तरम्—**नालिकेरजा** । अस्य अनुलोमपाठेन प्रथमप्रश्नोत्तरं फलति । नालिकेरफलस्योपरिभवमावरणमतिकठिनं दृढं च भवति, तज्जं मसीपात्रं लेखकैर्ग्राह्यम् । प्रतिलोमपाठेन तु 'जारकेलिना' इति द्वितीयप्रश्नोत्तरमायाति, जारेणोपपतिना सह केलिना क्रीडया वन्धकी हृष्यति । 'केलि' शब्दः पुंस्यपि । अत्रापि न मध्यवर्णत्यागः ।

अस्यैव तृतीयं यथा—

**असुरसुरनरेन्द्रैरुह्यते का शिरोभि-**
**स्तनुरपि शुचिवस्त्रे कोऽतिविस्तारमेति ।**

वदति कमलयोनिः सेव्यते केन पुष्पं
मधुरमसृणमृद्वी का भवेद् उत्पलस्य ॥२६॥

**असुरेति,** असुरैः, सुरैः, नरेन्द्रै राजभिश्च शिरोभिः का उह्यते धार्यते ? तनुः लघुरपि कः पदार्थः शुचिनि उज्ज्वले वस्त्रे अतिविस्तारम् प्रति प्राप्नोति ? कमलयोनिः ब्रह्मा वदति पृच्छतीत्यर्थः, पुष्पं केन सेव्यते इति ? उत्पलस्य कमल-सम्बन्धिनी का मधुरा मिष्टा, मसृणा श्लक्ष्णा, मृद्वी कोमला च भवति ?

अत्रोत्तरम्—**मालिका-कालिना** । मालिकेत्यस्यानुलोमपाठेन प्रथम-प्रश्नोत्तरं भवति, असुरादिभिः मालिका पुष्पमालेव शिरोभिर्धार्यते । अस्यैव प्रतिलोम-पाठे 'कालिमा' इति द्वितीयप्रश्नोत्तरं भवति । कालिमा हि शुचिवस्त्रे बहुप्रसार-माप्नोति । 'कालिना' इति अनुलोमपाठेन तृतीयप्रश्नोत्तरं भवति । हे क ! हे ब्रह्मन्, आलिना भ्रमरेण पुष्पं सेव्यते, इति ब्रह्माणं प्रति तत्प्रश्नोत्तरम् । इदमेव प्रतिलोमं पठ्यमानं 'नालिका' इति चतुर्थप्रश्नोत्तरं जायते । उत्पलस्य 'नालिका' नालदण्डः, माधुर्यादियुक्ता भवति ।

इदानीं यत्र मध्यवर्णलोपेनाप्युत्तरं जायते तदुदाहरति—

हिमांशुखण्डं कुटिलोज्ज्वलप्रभं
भवेद् वराहप्रवरस्य कीदृशम् ।
विहाय वर्णं पदमध्यसंस्थितं
न किं करोत्येव जिनः करोति किम् ॥२७॥

**हिमांशिवति,** कुटिलं वक्रम्, उज्ज्वला प्रभा कान्तिर्यस्य तादृशं च हिमांशोः चन्द्रमसः खण्डं वराहप्रवरस्य शूकरश्रेष्ठस्य कीदृशम् केनाङ्गेन तुल्यं भवेत् ? उत्तरपदमध्ये संस्थितं वर्णं विहाय विलुप्य, जिनः जैनानामुपास्यः किं न करोत्येव ? किं च करोति ?

अत्रोत्तरं **दंष्ट्राभम्** । चन्द्रखण्डं वराहस्य दंष्ट्राया 'दाढ़' इति लोके प्रसिद्धाया आभा इव आभा यस्य तादृशं भवेत् । चन्द्रशकलं हि वराहदंष्ट्रयोपमीयते । वक्रत्वोज्ज्वलत्वादिना तत्समानत्वात् । इदमेव 'दंष्ट्राभम्' इति पदं 'ष्ट्रा' इति मध्यवर्णलोपेन 'दम्भम्' इत्येवं सद् द्वितीयप्रश्नोत्तरं भवति, जिनो हि न जातु दम्भं कपटं करोति, किं च

मध्यवर्णलोपे प्रतिलोमपाठेन 'भन्दम्' इत्येवं तृतीयप्रश्नोत्तरं भवति, जिनो 'भन्दम्' कल्याणं सुखं च लोकानां करोति। 'भदि' कल्याणे सुखे च, ... घञि भन्दः। इदमेकवर्णलोपोदाहरणम्। वर्णद्वयलोपोदाहरणं यथा—

वसन्तमासाद्य वनेषु कीदृशाः
पिकेन राजन्ति रसालभूरुहाः।
निरस्य वर्णद्वयमत्र मध्यमं-
तव द्विषां कान्यतमा तिथिश्च का ॥२८॥

**वसन्तेति,** रसालभूरुहा आम्रवृक्षा वनेषु वसन्तमासाद्य पिकेन कोकिलेन स कीदृशा राजन्ति ? अत्रोत्तरे मध्यमं मध्यगतं वर्णद्वयं निरस्य परित्यज्य तव द्विषां सम्बन्धिनी का ? अन्यतमा सर्वान्त्या तिथिश्च का ?

अत्रोत्तरम्—**कान्तगिरा**। वसन्ते रसालवृक्षाः पिकैः सह कान्तया मनोहारिण्या गिरा वाण्या राजन्ते। अत्रोत्तरे 'न्तगि' इति वर्णद्वयलोपे अनुलोमपाठे च 'कारा' वन्दिगृहम् इति द्वितीयप्रश्नोत्तरं फलति। प्रतिलोमपाठे च 'राका' पूर्णिमा तिथिः, इति तृतीयप्रश्नोत्तरं भवति।

इतिगतप्रत्यागतजातिः।

वर्धमानाक्षरं लक्षयति—

आदौ मध्ये तथान्ते वा वर्धन्ते वर्णजातयः।
एकद्वित्र्यादयो यत्र वर्धमानाक्षरं हि तत् ॥२९॥

**आदाविति,** यत्रोत्तरे आदौ, मध्ये, अन्ते वा एकद्वित्र्यादयः एको द्वौ त्रयो वा, आदिपदात् चतुरादिसंख्यापि ग्राह्या, वर्णा वर्धन्ते तद् वर्धमानाक्षरं पृष्टम्, उच्यते। अयं स्पष्टो भावः—यत्र प्रथमप्रश्नोत्तरे एकस्य द्वयोस्त्रयाणां वा वर्णानां योजनेन प्रश्नान्तरस्योत्तरं फलति, तद् वर्धमानाक्षरं पृष्टम्। अक्षरयोजनं चादौ मध्येऽन्त्ये वा यथाप्रश्नमवधेयम्। यथा—

किमनन्ततया ख्यातं पादेन व्यङ्गमाह्वय।
जनानां लोचनानन्दं के तन्वन्ति घनात्यये ॥३०॥

**किमिति,** अनन्ततया अन्तरहितत्वेन किं ख्यातं प्रसिद्धम् ? पादेन व्यङ्गं विकलाङ्गम्, आह्वय संबोधय, पादेनेति "येनाङ्गविकारः" इति तृतीया। घनात्यये

शरदि जनानां लोचनानन्दं के तन्वन्ति कुर्वन्ति ?

अत्रोत्तरं **खञ्जनाः**। तत्र प्रथमप्रश्नोत्तरम्—'खम्' आकाशम्, तदेव हि सर्वव्यापकत्वाद् अनन्तम्। खमित्यस्याग्रे 'ज' इत्यस्य योजनेन हे 'खञ्ज' इति द्वितीयप्रश्नोत्तरं फलति, पादविकलो हि हे 'खञ्ज' इत्येवं संबोध्यते। यदि 'नाः' इति द्वितीयवर्णोऽपि योज्यते चेत् तदा 'खञ्जनाः' इति तृतीयप्रश्नोत्तरं जायते। खञ्जनपक्षिणो हि शरदि जनान् मोदयन्ति। अत्र क्रमश एकैकाक्षरवृद्धिः।

अस्यैव द्वितीयमुदाहरणं यथा—

**उरस्थलं कोत्र विना पयोधरं-**
**बिभर्ति, संबोधय मारुताशनम्।**
**वदन्ति कं पत्तनसंभवं जनाः**
**फलं च किं गोपवधूकुचोपमम्॥ ३१॥**

**उरस्थलमिति,** १—अत्र जगति, कः पयोधरं कुचं विना उरस्थलं-वक्षःस्थलं बिभर्ति धारयति ? २—मारुताशनं सर्पं संबोधय ? ३—जनाः पत्तने नगरे संभव उत्पत्तिर्वसतिर्वा यस्य तं कं वदन्ति ? ४-गोपवधूनां गोपीनां कुचौ स्तनौ, तदुपमं तत्तुल्यं फलं किम् ?

अत्रोत्तरम्—**नागरङ्गम्**। स्तनरहितं वक्षःस्थलं 'ना' नरो बिभर्त्ति। इति प्रथमोत्तरम्। हे 'नाग' हे सर्प! इति द्वितीयोत्तरम्। 'नागरम्' नगरे भवम् इति तृतीयोत्तरम्। 'नागरङ्गम्' नारङ्गीफलम् इति चतुर्थोत्तरम्। अत्रापि पूर्ववत् क्रमश एकैकाक्षरवृद्ध्या प्रश्नोत्तराणि फलन्ति।

इदानीं द्विशस्त्रिशो वा आदिमध्यावसानेषु वर्णवृद्धिमुदाहरति—

**प्रायेण नीचलोकस्य कः करोतीह गर्विताम्।**
**आदौ वर्णद्वयं दत्त्वा ब्रूहि के वनवासिनः॥ ३२॥**

**प्रायेणेति,** इह लोके प्रायेण नीचलोकस्य क्षुद्रजनस्य गर्विताम् अभिमान-सम्बन्धं कः करोति ? आदौ प्रथमप्रश्नोत्तरस्यादौ वर्णद्वययोजनेन के वनवासिन-उच्यन्ते ?

अत्रोत्तरम्-**शबराः**। तत्र प्रथमप्रश्नोत्तरं 'राः' धनम् इति। धनेनैव

नीचानामभिमानो भवति। 'राः' इत्यस्यादौ 'शव' इत्यक्षरद्वयवृद्धया 'शवराः' भिल्ला इति द्वितीयोत्तरम्।

**सानुजः काननं गत्वा नैकषेयाञ्जघान कः।**
**मध्ये वर्णत्रयं दत्वा रावणः कीदृशो वद॥ ३३॥**

**सानुज इति,** कः सानुजः अनुजेन कनिष्ठभ्रात्रा सह काननं गत्वा नैकषेयान् १ निकषात्मजान् राक्षसान्, जघान? मध्ये प्रथमप्रश्नोत्तरस्य मध्ये वर्णत्रयं दत्त्वा त्रयाणां वर्णानां निवेशनेन रावणः कीदृशः किंविशेषणक इति वद।

अत्रोत्तरम्—**राक्षसोत्तमः**। 'रामः' दशरथज्येष्ठः काननं गत्वा राक्षसान् जघान। अस्य रामशब्दस्य मध्ये 'क्षसोत्त' इति वर्णत्रयनिवेशनेन 'राक्षसोत्तमः' राक्षसेषु उत्तम इति द्वितीयप्रश्नोत्तरं लभ्यते।

**धत्ते वियोगिनीगण्डस्थलपाण्डुफलानि का।**
**वद वर्णौ विधायान्ते सीता हृष्टा कयाऽभवत्॥ ३४॥**

**धत्त इति,** वियोगिन्या गण्डस्थलवत् पाण्डूनि श्वेतवर्णानि फलानि का धत्ते? अन्ते प्रथमप्रश्नोत्तरस्यान्ते वर्णौ विधाय वर्णद्वयसंयोजनेन (बोधितया) कया हेतुना सीता रामपत्नी हृष्टाऽभवत्?

अत्रोत्तरं **लवलीलया**। 'लवली' लता पाण्डुवर्णानि फलानि धत्ते। लवली-शब्दस्यान्ते 'लया' इत्यक्षरद्वये योजिते 'लवलीलया' इति द्वितीयोत्तरं फलति, सीता हि लवस्य लवाख्यस्य स्वसुतस्य लीलया बालक्रीडया हृष्टाऽभवत्।

**विष्णोः का वल्लभा देवी लोकत्रितयभाविनी।**
**वर्णावाद्यन्तयोर्दत्त्वा कः शब्दस्तुल्यवाचकः॥ ३५॥**

**विष्णोरिति,** लोकानां त्रितयस्य भाविनी उत्पादयित्री का देवी विष्णोः वल्लभा प्रिया? आद्यन्तयोः प्रथमप्रश्नोत्तरस्य आदौ अन्ते च वर्णौ दत्त्वा वर्णद्वयसंयोजनेन [निपन्नः] कः शब्दः, तुल्यवाचकः तुल्यार्थं वक्ति?।

अस्योत्तरं **समानः**। 'मा' लक्ष्मीर्विष्णुवल्लभा। माशब्दस्य आदौ 'स' अन्ते च 'नः' इति वर्णद्वयनिवेशनेन 'समानः' इति तुल्यार्थकः शब्दो निष्पद्यते।

---

१—निकषाया अपत्यानि इति विग्रहे "स्त्रीभ्यो ढक्"।

पूर्वेषूदाहरणेष्वादावेव, अन्त एव वा, अत्र त्वादावन्ते च वर्णसंनिवेश इति विशेषः ।

इति वर्धमानाक्षरजातिः ।

**आदितो मध्यतोऽन्ताद् वा हीयन्ते वर्णजातयः ।**
**एकद्वित्रादयो यत्र हीयमानाक्षरं हि तत् ॥ ३६ ॥**

हीयमानाक्षरजातिं लक्षयति **आदित** इति, यत्र आदितः, मध्यतः, अन्ताद् वा एकद्वित्रादयः वर्णजातयो हीयन्ते त्यज्यन्ते, तद् हीयमानानि अक्षराणि यत्र तादृशं सद् हीयमानाक्षरं पृष्टं कथ्यते । वर्धमानाक्षरजातिविपरीतमेतत्, तत्र वृद्धिः, अत्र च वर्णहानिः, इतरदुभयोस्तुल्यमेव ।

अथोदाहरति—

**वसन्तमासाद्य विकाशि राजते**
**वनेषु किं वल्लभ पुष्पमुच्यताम् ।**
**विहङ्गमं कं च परिस्फुटाक्षरं**
**वदन्ति, कं पङ्कजसंभवं विदुः ॥ ३७ ॥**

**वसन्तमिति**, १–हे वल्लभ ! वनेषु वसन्तमासाद्य प्राप्य विकाशि विकसनशीलं किं पुष्पं राजते शोभते इति उच्यताम् ? २–कं विहङ्गमं पक्षिणं परिस्फुटानि व्यक्तानि, अक्षराणि वर्णा यस्य तादृशं मनुष्यवद् व्यक्तवाचं वदन्ति ? ३—कं च पङ्कजात् कमलात् संभवः यस्य तादृशं कमलयोनिं विदुः ?

अत्रोत्तरं **किंशुकम्** । १–'किंशुकम्' पलाशपुष्पं वसन्ते विकस्य राजते । २–'शुकम्' पक्षिणं स्फुटाक्षरवाचमाहुः । ३–पङ्कजसंभवं 'कम्' प्रजापतिं विदुः । अत्र क्रमश एकैकाक्षरहान्योत्तराणि संपद्यन्ते ।

**समुद्यते कुत्र न यान्ति पांसुलाः**
**समुद्यते कुत्र भयं भवेज्जलात् ॥**
**समुद्यते कुत्र तवापयात्यरिः ।**
**प्रहीणसंबोधनवाचि किं पदम् ॥ ३८ ॥**

**समुद्यत इति**, १–कुत्र कस्मिन् वस्तुनि, समुद्यत उदिते सति पांसुलाः व्यभिचारिण्यः (उपपतिगृहे) न यान्ति ? २–कुत्र समुद्यते जलाद्भयं भवेत् ? ३–

कुत्र समुद्यतं ऊर्ध्वीकृते तव अरिः, अपयाति पलायते ? ४—अहीनस्य नीचस्य सम्बोधनं वक्ति इति तथाभूतं पदं किम्, नीचसंबोधने किं पदमुच्यत इत्यर्थः।

अत्रोत्तरम्--**हिमकरे** । १—'हिमकरे' चन्द्रमसि समुदिते पांसुलाः कश्चन पश्येदिति भिया जारगृहं न यान्ति । २—'मकरे' समुद्यते जलात् भयं जायते । ३—'करे' हस्ते शस्त्रप्रहारार्थमूर्ध्वीकृत एव शत्रवः पलायन्ते। ४—हीनसंबोधकं पदं 'रे' इति । अत्रापि पूर्ववदेकैकाक्षरहान्या द्वितीयाद्युत्तराणि फलन्ति ।

अथ द्विशो वर्णहानिमुदाहरति—

**तपस्विनोत्यन्तमहासुखाशया-**
**वनेषु कस्मै स्पृहयन्ति सत्तमाः ।**
**इहाद्यवर्णद्वितयं निरस्य भोः**
**सदा स्थितं कुत्र च सत्त्वमुच्यताम् ॥ ३९ ॥**

**तपस्विन इति,** १—सत्तमा विदुषां मूर्धन्याः तपस्विनः तपश्चर्यावन्तः अत्यन्तमनिवर्ति यत् महासुखं मोक्षापरपर्यायमानन्दमयात्मकैवल्यम्, तदाशया वनेषु कस्मै वस्तुने स्पृहयन्ति साभिलाषा भवन्ति ? २—इह प्रथमप्रश्नोत्तरे आद्यं वर्णद्वितयं निरस्य निष्कास्य, अवशेषिते कुत्र शब्दस्वरूपे सत्त्वं सकारधर्मः सदा स्थितम् ?

अस्योत्तरं **तपसे** । १—सत्तमा मोक्षलाभाय 'तपसे' सस्पृहा भवन्ति । २—अत्राद्ये 'तप' इति वर्णद्वये निरस्ते 'से' इत्यवशेषिते सकारे 'सत्त्वं' सदा तिष्ठति। अत्रादिवर्णद्वयहानिः ।

मध्यवर्णद्वयहानिर्यत्र तदुदाहरणं यथा—

**पुरुषः कीदृशो वेत्ति प्रायेण सकलाः कलाः ।**
**मध्यवर्णद्वयं त्यक्त्वा ब्रूहि कः स्यात् सुरालयः ॥४०॥**

**पुरुष इति,** १—कीदृशः पुरुषः प्रायेण सकलाः कला वेत्ति ? २—प्रथमप्रश्नोत्तरे मध्यं वर्णद्वयं त्यक्त्वा अवशेषितः कः शब्दः सुरालयः सुराणामालयः स्वर्गः, तद्बोधकः स्यादिति ब्रूहि ।

अत्रोत्तरम्--**नागरिकः** । १—'नागरिकः' नगरोद्भवो विदग्धः पुरुषः

सकलकलाविद्वान् भवति । २—अस्मादुत्तराद् 'गरि' इति मध्यमवर्णद्वयस्य त्यागेन 'नाकः' इति स्वर्गबोधकः शब्दोऽवतिष्ठते ।

आद्यम् अन्त्यं च वर्णद्वयं यत्र त्यज्यते तन्निदर्शनं यथा—

**यजमानेन कः स्वर्गहेतुः सम्यग् विधीयते ।**
**विहायाद्यन्तयोर्वर्णौ गोत्वं कुत्र स्थितं वद ॥४१॥**

**यजमानेनेति,** १—यजमानेन यज्ञं कुर्वता पुरुषेण स्वर्गहेतुः स्वर्गप्राप्तिकारणं कः पदार्थः सम्यग् विधीयतेऽनुष्ठीयते ? २—प्रथमप्रश्नोत्तरस्य आदावन्ते चैकैकं वर्णं विहायावशेषिताच्छब्दस्वरूपात् प्रतीते कुत्र कस्मिन् पदार्थे गोत्वं स्थितम् इति वद ।

अस्योत्तरम्--**यागविधिः** । १—यजमानेन 'यागविधिः' देवतामुद्दिश्य द्रव्यस्य त्यागो याग इत्यभिधीयते, तस्य विधिः इतिकर्तव्यता सम्यगनुष्ठीयते । २—अस्माद् आद्यन्तयोः 'विधिः' इति वर्णद्वये परित्यक्ते शिष्टाद् 'गवि' इति शब्दाद् बोधिते गोपदार्थे गोत्वं स्थितं भवति ।

इति हीयमानाक्षरजातिः ।

द्विविधं शृङ्खलाबन्धपृष्टं नागपाशपृष्टं चैकेन लक्षयति—

**अन्योन्याक्षरवर्तिन्या १एकान्तरितयाथवा ।**
**शृङ्खलाबन्ध इत्युक्तो ग्रन्थिमान्नागपाशकः ॥४२॥**

**अन्योन्येति,** " यत्र प्रश्ने अन्योऽन्याक्षरवर्तिन्या अन्योऽन्यसम्बन्धेन, कोऽर्थः ? प्रथमवर्णस्य द्वितीयेन, द्वितीस्य तृतीयेन, तृतीयस्य चतुर्थेन, एवं रीत्या कोष्ठाक्षरवर्तिन्या रेखया प्रश्नोत्तरसम्बन्धः सा जातिः शृङ्खला ज्ञेया । अथवा एकान्तरितया ( मध्य एकवर्णव्यवधानेन ) कोऽर्थः ? प्रथमवर्णस्य तृतीयेन, द्वितीय-वर्णस्य चतुर्थेन, तृतीयवर्णस्य पञ्चमेन वर्णेन संम्बन्धः सा जातिरेकान्तरितशृङ्खला ज्ञेया । ग्रन्थियुक्तो वर्णसंबन्धो नागपाशाख्यो ज्ञेयः " इति ताराचन्द्रः ।

अयं स्पष्टो भावः, यथा शृङ्खलावयवेषु प्रथमावयवो द्वितीयेन सम्बध्यते, द्वितीयावयवश्च तृतीयेन, तृतीयश्च चतुर्थेन, इत्येवमादि, तथैव यत्र प्रथमवर्णो द्वितीय-

---

१——सन्ध्यभावश्चिन्त्यः । क्वचित्तु ' रेखान्तरतयाथवा ' इति पाठः । क्वचन ' अन्योन्याक्षरवर्तिन्या संम्बन्धः सा च शृङ्खला । अथैकान्तरतया बन्धो ग्रन्थमान्नागपाशकः ' ॥इत्येवं सकलकारिकापाठः ।

वर्णेन, द्वितीयस्तृतीयेन, तृतीयश्च चतुर्थेनेत्येवंरीत्या सम्बध्य प्रश्नोत्तराणि उद्भाव्यन्ते स श्रृङ्खलासमत्वाच्छृङ्खलाबन्ध उच्यते । यत्र च मध्य एकवर्णपरित्यागेन वर्णयोः सम्बन्ध उत्तरप्राप्तिहेतुः, अर्थात्—प्रथमतृतीययोः, द्वितीयचतुर्थयोः, तृतीयपञ्चमयोः सम्बन्धेन उत्तरं निर्गलति, स एकान्तरश्रृङ्खलाबन्धः ।

अथोदाहरति—

**पवित्रमतितृप्तिकृत् किमिह किं भटामन्त्रणं-**
**ब्रवीति धरणीधरश्च किमजीर्णसंबोधनम् ।**
**हरिर्वदति को जितो मदनवैरिणा संयुगे**
**करोति ननु कः शिखण्डिकुलताण्डवाडम्बरम् ॥४३॥**

**पवित्रमिति,** १—इह, अतितृप्तिकृत् अतिशयेन तृप्तिकरं पवित्रं पावनसाधनं च किमस्ति ? २—भटस्य योधस्य, आमन्त्रणं सम्बोधनपदं किम् ? ३—धरणीधरः पर्वतः, ब्रवीति पृच्छतीत्यर्थः, यत्, अजीर्णसंबोधनं अजीर्णस्य संबोधनम् आमन्त्रणं किम् ? ४—हरिः विष्णुः वदति पृच्छति, यत् मदनस्य कामस्य वैरिणा शत्रुणा शिवेन, संयुगे रणे, को जितः ? ५—ननु शिखण्डिनां मयूराणां कुलस्य, यत् ताण्डवं नृत्यम्, तदाडम्बरं तदारम्भम्, कः करोति ?

अत्रोत्तरम्—**पयोधरसमयः** । १—'पयः' जलमतितृप्तिकरं पवित्रं च । २—हे 'योध' इति भटस्य सम्बोधनम्, ३—धरणीधरं प्रति अजीर्णसम्बोधनम् हे 'धर' 'रस' इति । 'व्याधयो रसमूलाः स्युः' इत्यादौ रसपदेनाजीर्णमेव गृह्यते । ४—हे 'सम' ! मा लक्ष्मीः तया सह वर्तमानः समः, सम्बोधने हे 'सम' हे विष्णो ! शिवेन 'मयः' मयनामा दैत्यो जितः । ५—'पयोधरसमयः' पयोधराणां मेघानां समयः कालः, मयूरान् नर्तयति । यथा श्रृङ्खलावयवाः—प्रथमावयवो द्वितीयावयवेन, द्वितीयस्तृतीयेन, तृतीयश्चतुर्थेन-इत्येवं रीत्या परस्परं सम्बद्धा भवन्ति, तथैवात्रापि प्रथमाक्षरं द्वितीयाक्षरेण, द्वितीयं तृतीयेन, तृतीयं चतुर्थेन मिलित्वोत्तरमुल्लासयन्ति । अतः श्रृङ्खलासादृश्याच्छृङ्खलाबन्धपृष्टमिदम् ।

अस्यैव द्वितीयोदाहरणं यथा,

**भवति जयिनी काजौ सेनाऽऽह्वयाधरभूषणं-**
**वहति किमहिः पुष्पं कीदृक्ककुब्भसमुद्भवम् ॥**

**महति समरे वैरी वीर ! त्वया वद किं कृतः**
**कमलमुकुले भृङ्गः कीदृक्पिबन् मधु राजते ॥४४॥**

**भवतीति**, १--आजौ संग्रामे, का सेना, जयिनी, शत्रुजयनशीला? २--अधरस्याधरोष्ठस्य, भूषणम् अलङ्करणम्, आह्वय सम्बोधय? ३-अहिः सर्पः किं वहति धारयति? ४--कुसुम्भसमुद्भवं पुष्पं कुसुम्भकुसुमं कीदृक्? ५--हे वीर त्वया महति समरे रणे वैरी किं कृतः इति वद। ६--कमलमुकुले कमलकलिकायां मधु पुष्परसं पिबन् भृङ्गः कीदृक् सन् राजते?

अत्रोत्तरम्—**परागरञ्जितः**। अत्रापि पूर्ववत् प्रथमद्वितीययोः, द्वितीयतृतीययोः, चतुर्थपञ्चमयोः, पञ्चमषष्ठयोः, सम्बन्धेन समुदायेन चोत्तराण्युद्भवन्ति। तद् यथा--१—'परा' उत्कृष्टा सेना जयिनी, २—हे 'राग' इति अधरभूषणसम्बोधनम्, अधरोष्ठं रागेण रक्तिम्नैवालङ्क्रियते। ३—अहिः 'गरम्' विषं वहति। ४—कुसुम्भपुष्पं 'रञ्जि' वस्त्ररञ्जनसाधनं भवति। णिजन्ताण्णिनिः। ५—त्वया वैरी 'जितः'। ६—परागेण पुष्परजसा रञ्जितः सन् भ्रमरः कमलमकरन्दं पिबति। एकान्तरशृङ्खलाबन्धमुदाहरति—

**आह्वानं किं भवति हि तरोः कस्यचित्, प्रश्नविज्ञाः**
**प्रायः कार्यं किमपि न कलौ कुर्वते के परेषाम्।**
**पूर्णं चन्द्रं वहति ननु का पृच्छति म्लानचक्षुः**
**केनोदन्याजनितमसमं कष्टमाप्नोति लोकः ॥ ४५ ॥**

**आह्वानमिति**, १—हे प्रश्नविज्ञाः! कस्यचित्, तरोर्वृक्षस्य, आह्वानम् आमन्त्रणम्, किं भवति? २—कलौ प्रायः के परेषां किमपि कार्यं न कुर्वते? ३—ननु का पूर्णं षोडशकलं चन्द्रं वहति? ४—म्लानमुपहतम् चक्षुर्यस्य स काणः पृच्छति यल्लोकः उदन्यया पिपासया, जनितम्, असमम् असदृशम्, कष्टं केन कारणेन, आप्नोति?

अत्रोत्तरम्—**नीरापकारेण**। अत्र मध्ये एकैकमक्षरं वर्जयित्वोत्तराणि फलन्ति, तद् यथा राकारं मध्ये त्यक्त्वा प्रथमतृतीययोः संयोगेन हे 'नीप!' हे कदम्ब, इति प्रथमोत्तरम्, एवं काकारं परिहाय तृतीयपञ्चमसंयोगेन 'परे' शत्रवः इति द्वितीयोत्तरं फलति। तथैव पकारं मध्ये परित्यज्य द्वितीयचतुर्थयोः सम्मेलनेन

'राका' पूर्णिमा इति तृतीयप्रश्नोत्तरम्, तत्रैव हि पूर्णचन्द्रोदयो जायते। मध्ये ... इत्यक्षरपरिहारेण चतुर्थषष्ठाभ्यां समुदायेन च हे 'काण!' 'नीरापकारेण' नीरस्य जलस्य, अपकारेण तिरस्कारेण, जनः पिपासया कष्टं प्राप्नोति इति। इति चतुर्थमुत्तरम्। चित्रं पुस्तकान्ते।

अस्यैव द्वितीयमुदाहरणं यथा —

**का सम्बुद्धिः सुभट भवतो ब्रूहि पृच्छामि सम्यक्**
**प्रातः कीदृग् भवति विपिनं संप्रबुद्धैर्विहङ्गैः॥**
**लोकः कस्मिन् प्रथयति मुदं का त्वदीया च जैत्री**
**प्रायो लोके स्थितमिह सुखं जन्तुना कीदृशेन॥ ४६॥**

केति, १—हे सुभट! हे सुयोध! अहं पृच्छामि, यद् भवतः सम्बुद्धिः सम्बोधनं का? तत् त्वं ब्रूहि। २—प्रातः, सम्प्रबुद्धैर्जागरितैः विहङ्गैः पक्षिभिः लक्षितं विपिनं कीदृग् भवति? ३—लोकः कस्मिन् वस्तूनि मुदमानन्दं प्रथयति प्रकाशयति? ४—त्वदीया तव सम्बन्धिनी का जैत्री जयशीला? ५—इह लोके कीदृशेन जन्तुना प्रायः सुखं सुखपूर्वकं स्थितम्?

अत्रोत्तरम्—**वीहारसेविना**। हाकारं मध्ये त्यक्त्वा प्रथमतृतीययोः संयोगेन हे 'वीर'! इति सुभटामन्त्रणं प्रथमोत्तरं फलति, 'से' इत्यक्षरपरिहारेण तृतीयपञ्चमसंयोगेन 'रवि' रवः शब्दः तद्युक्तमिति द्वितीयोत्तरं फलति। एवं ... वर्जयित्वा द्वितीयचतुर्थसंयोगेन 'हासे' इति तृतीयोत्तरं फलति। एवं पञ्चमाक्षरहानेन चतुर्थषष्ठसंयोगेन 'सेना' इति चतुर्थमुत्तरम्। समुदायेन 'वीहारसेविना' वीहारान् बौद्धमन्दिराणि सेवत इति तादृशेन जैनेन प्रायः सुखं स्थीयत इति पञ्चममुत्तरम्। वीहारशब्दे विहरतेर्घञ्, "उपसर्गस्य घञ्यमनुष्ये बहुलम्" इति दीर्घः। बन्धाकारस्तु पूर्ववज्ज्ञेयः।

इति शृङ्खलाबन्धजातिः।

अथ नागपाशमुदाहरति,

**गोष्ठी विदग्धजनवत्यपि शोचनीया,**
**कीदृग्भवेत्तरणिरश्मिषु का सदाऽस्ति।**

दुर्वारदर्पदलितामरनायकापि १
कीदृश्यकारि सुरशत्रुचमूर्गुहेन ॥ ४७ ॥

**गोष्ठीति**, १—विदग्धाः चतुराः, जनाः सन्त्यस्याम्, इति तादृश्यपि कीदृक् किंविधा, गोष्ठी सभा, शोचनीया अप्रशंसनीया, भवेत् ? २—तरणेः सूर्यस्य रश्मिषु किरणेषु, सदा, का, अस्ति विद्यते ? ३—दुर्वारेण दुरतिक्रमेण, दर्पेण अभिमानेन, दलितः पीडितः, अमराणां देवानां, नायकः स्वामी इन्द्रः, यया तादृश्यपि, सुरशत्रूणाम् असुराणाम्, चमूः सेना, गुहेन देवसेनापतिना कार्तिकेयेन, कीदृशी अकारि कृता ?

अत्रोत्तरम्—**तारकविरहिता**। अत्राद्येऽक्षरद्वये त्यक्ते 'कविरहिता' इति प्रथमोत्तरं फलति। कविभी रहिता गोष्ठी शोचनीया भवतीत्यर्थः। अन्तिमेऽक्षरयुग्मे परिहृते विपरीतपाठेन च 'रविकरता' इति द्वितीयमुत्तरं निष्पद्यते। सूर्यकिरणतेति तदर्थः, समुदायेन च 'तारकविराहिता' तारकेण तारकाख्यासुरेण विरहिता, दैत्यसेना गुहे न कृतेति चतुर्थमुत्तरं निर्गलति। अत्रापि सन्निवेश्यमानान्यक्षराणि नागपाशचित्रमुल्लासयन्तीत्येष नागपाशबन्धः। अत्र प्रथमसप्तमौ द्वितीयपञ्चमौ च वर्णौ श्लिष्टौ, चित्रं पुस्तकान्ते।

नागपाशस्यैव द्वितीयभेदमाह यथा—

कीदृक् परैरुपहतो भवति क्षितीशः
पृच्छत्यनुच्च इह किं विदितं पवित्रम्।
विच्छिन्नपाणिचरणो जनको यदीयः
कीदृक् परैरभिहितः स पुमान् पुनः स्यात् ॥४८॥

**कीदृगिति**, १—कीदृक्, क्षितीशः राजा, परैः शत्रुभिः, उपहतः तिरस्कृतः, भवति ? २—अनुच्चः वामनः, पृच्छति—इह जगति, पवित्रं किं विदितं-प्रसिद्धम् ? ३—यदीयः यस्य, जनकः पिता, विच्छिन्नं निकृत्तं पाणिचरणं यस्य स हस्तपादविवर्जितः, अस्ति, स पुमान्, पुनः, परैः कीदृग् अभिहितः स्यात्, केन

---

१—'दलितामरनायका' इत्यत्रान्तर्वर्तिनीं विभक्तिमाश्रित्य आपः सुपःपरत्वाद् 'असुपः' इति प्रतिषेधाद् 'बहुपरिव्राजका' इत्यादाविवेत्वं न।

शब्देनोच्चारितः स्यात् ?

अत्रोत्तरं—**व्यङ्गतनयः** । अत्राद्येऽक्षरे त्यक्ते **'गतनयः'** इति प्रथमस्योत्तरम् । गतो नयो नीतिर्यस्य स नीतिरहितो राजा परैरुपहन्यते । अन्त्येऽक्षरे त्यक्ते विपरीतानुपूर्व्या पाठे च **'नत ! गव्यम्'** इति द्वितीयस्योत्तरम् । हे नत ! वामन ! गव्यं गोर्विकारो गोमूत्रगोमयादि जगति पवित्रं विदितम्, समुदायेन अनुलोमपाठे च **'व्यङ्गतनयः'** इति तृतीयोत्तरम् । विगतानि अङ्गानि यस्य स व्यङ्गः तस्य तनयो व्यङ्गतनयः ।

इति नागपाशजातिः ।

अथैकया चित्रं संशुद्धं च लक्षयति,

**भाषाभिश्चित्रितं यत् स्यात् संस्कृतप्राकृतादिभिः ।**
**सन्तश्चित्रं तदिच्छन्ति संशुद्धं त्वेकभाषया ॥ ४९ ॥**

**भाषाभिरिति**, यत् संस्कृतप्राकृतादिभिर्भाषाभिश्चित्रितं मिश्रितं पृष्टं सन्तो विद्वांसः 'चित्रम्' इच्छन्ति, चित्रनाम्ना व्यपदिशन्तीत्यर्थः । एक-भाषया निबद्धं तु पृष्टं 'संशुद्धम्' कथयन्ति । अयं स्पष्टोऽर्थः-यत्र भाषाद्वयेन कृतं प्रश्नजातस्य भाषाश्लेषेणोत्तरं दीयते तच्चित्रमुच्यते, यत्र त्वेकभाषयैव प्रश्नस्तदुत्तरं चोत्तरं तत् संशुद्धम् । षड्विधाः खलु भाषा भवन्ति, तद् यथा—

**संस्कृतं प्राकृतं चैव शौरसेनी च मागधी ।**
**पैशाची चाप्यपभ्रंशः षड् भाषा विबुधैः स्मृताः ॥**

तत्र यथाक्रमं पूर्वं संस्कृतप्राकृतयोश्चित्रमुदाहरति—

**किं न स्यात् कीदृक्षं महतोऽपि च तादृशस्य जलराशेः ।**
**२ दिणमणि किरणप्फंसण पडिउद्धं होइ किं गोसे ॥५०॥**

**किमिति**, १—तादृशस्य सर्वजनप्रसिद्धस्य, महतोऽपि, जलराशेः स...

---

१—'हे व्यङ्ग ! हे वामन ! गव्यं जगति पवित्रम्' इति ताराचन्द्रः । परं व्याख्यायां व्यङ्गपदस्य वामनार्थे प्रवृत्तिरस्वरसेव ।

२—दिनअर इति क्वचित् पाठः । दिनमणिकिरणस्पर्शनप्रतिबुद्धं भवति किं प्रातः-इति संस्कृतम् ।

द्रस्य, किं वस्तु, कीदृशं न स्यात् ? इति संस्कृतेन प्रश्नः । २—प्रातः, दिनमध्ये: सूर्यस्य, किरणानां स्पर्शनेन किं वस्तु प्रतिबुद्धं विकसितं भवति ? इति प्राकृतेन प्रश्नः । तयोर्द्वयोरपि भाषाश्लेषेणोत्तरम्—**कमलवणम्** इति । तत्र संस्कृतप्रश्नोत्तरं यथा- समुद्रस्य 'कम्' जलम्, 'अलवणम्' अक्षारं न स्यात् । प्राकृतस्योत्तरम्– 'कमलवणम्' कमलसमूहः प्रातः सूर्यकरस्पर्शेन विकसति । कमलवणमिति प्राकृतम् । अस्यैव द्वितीयं यथा–

**मत्स्यहितमम्बु कीदृक् पृच्छति रोगी निशासु किं भवति ।**
**कोऽनङ्गो वदति मृगः खे* गम्मइ केरिसा रविणा ॥५१॥**

**मत्स्येति,** १—कीदृग् अम्बु जलम्, मत्स्यानां हितं भवति ? २–रोगी पृच्छति, निशासु किं भवति ? इति, ३—मृगः वदति–अनङ्गः कामदेवः कः केन शब्देनोच्यते ? इति ४—खे आकाशे कीदृशा रविणा गम्यते ?

अत्रोत्तरम्–**अविसामभमिरेण** । १—न, विःपक्षी यस्मिंस्तद् 'अवि' पक्षिरहितं जलं मत्स्यहितम् । २—आमो रोगः, तेन सह वर्तत इति सामः, तत्-सम्बुद्धौ हे 'साम' ! हे रोगिन् निशासु 'भम्' नक्षत्रं भवति, जातावेकवचनम् । ३—हे 'एण' ! हे मृग ! कामः 'इः' उच्यते । इति त्रीणि संस्कृतोत्तराणि । चतुर्थं प्राकृतप्रश्नं प्राकृतेनोत्तरति–'अविसामभमिरेण' अविश्रामभ्रमिणा–अविश्रामा विराम-रहिता भ्रमिर्भ्रमणं यस्य तादृशेन निरन्तरभ्रमणशीलेन रविणा खे गम्यते ।

इति संस्कृतप्राकृतजातिः ।

अथ संस्कृतापभ्रंशचित्रमुदाहरति—

**प्रायो बिभ्यति कीदृशादरिगजाद्दन्तप्रहीणा गजाः**
**पृथ्वी संप्रति कीदृशा नृपतिना राजन्वती राजते ।**
**प्रायः प्रावृषि कीदृशी गिरितटी धत्ते च कः कं जले ।**
**†मज्झन्ने वलिये घणच्चयदिणे जादं सरो केरिसम् ॥५२॥**

**प्राय इति,** १—दन्तप्रहीणा दन्तरहिता गजाः, प्रायः कीदृशाद् अरि-

---

*—खे गम्यते कीदृशा रविणा-इति संस्कृतम् ।

†—मध्याह्नवेलायां घनात्ययदिने जातं सरः कीदृशम् । इति संस्कृतम् ।

गजाद् प्रतिपक्षभूताद् हस्तिनः, बिभ्यति भयमाप्नुवान्ति ? २—संप्रति पृथ्वी कीदृशा नृपतिना राज्ञा, राजन्वती[1] प्रशस्तराजवती सती राजते शोभते ? ३— प्रावृषि वर्षर्तौ, गिरितटी पर्वतप्रान्तप्रदेशः, प्रायः कीदृशी ? ४—जले कः कं धारयति ? ५—घणच्चयादिणे घनात्ययदिने शरदि, मज्झन्ने बलिये मध्याह्नवेलायाम्, सरः तडागः, केरिसं कीदृशम्, जातम् ?

अत्रोत्तरम्—**सरदादवताविदवाहिरम्**। तत्र संस्कृतोत्तरपक्षे—सरदात्, अवता, विदवा, अहिः, अम्, इति पदच्छेदः। १—'सरदात्' रदा दन्ताः, तैः सहितादरिगजाद् इतरे गजा बिभ्यति। २—'अवता' प्रजा रक्षता राज्ञा पृथ्वी राजन्वती सती शोभते। ३—वर्षर्तौ गिरितटी प्रायः 'विदवा' दवो वनवह्निः, तद्रहिता। ४—समुद्रजले 'अहिः' शेषः, 'अम्' विष्णुं धत्ते। ५—शरदि मध्याह्ने सरः 'सरदादवताविदवाहिरम्' शरदातपतापितबाह्यम्—शरदः, आतपेन तापितमुष्णतां नीतं बाह्यं बाह्यभागो यस्य तादृशं भवति।

अस्यैव द्वितीयं यथा—

**कृत्तं कीदृशमङ्गं दन्तभवं कं वदन्ति विद्वांसः।**
**अतिलघुवाचि पदं किं केरिसु सुअणेसु होइ जणो॥५३॥**

**कृत्तमिति**, १—कृत्तं छिन्नम्, अङ्गं कीदृशं भवति ? २—विद्वांसः कं वर्णं दन्तभवं दन्तस्थानोत्पन्नं वदन्ति ? ३—अतिलघुवाचि लघिष्ठार्थवाचकं पदं किम् ? ४—सुअणेसु सुजनेषु सुजनमध्ये, जणो जनः, केरिसु कीदृशः भवति ?

अत्रोत्तरं—**विस्रंतमणु**। संस्कृतोत्तरपक्षे 'विस्रम्' 'तम्' 'अणु', इति पदच्छेदः। १—कृत्तमङ्गं 'विस्रम्' [2]आमगन्धि अपक्वमांसगन्धयुक्तं भवति। २—'तम्' तकारं दन्तभवमाहुः। ३—'अणु' इति अतिलघुवाचकं पदम्। चतुर्थमुत्तरमपभ्रंशभाषया 'विस्रंतमणु' इति। विश्रान्तमनाः—इति तदर्थः। विश्रान्तं वीतरागद्वेषं मनः यस्य तादृशो जनः सुजन मध्ये भवति।

इति संस्कृतापभ्रंशजातिः।

---

१—"राजन्वान् सौराज्ये" इत्यनेन निपात्यते।

२—पूतिगन्धस्तु दुर्गन्धो विस्रं स्यादामगन्धि यत्—इत्यमरः।

संस्कृतमागधीचित्रमुदाहरति—

**किं सुखमाहुः प्रायः[1] केशविकारं च का हरेर्दयिता ।**
**कथमाभा कस्मिन्निशि[2] को लुच्चइ वीलपुलिसाणम् ॥५४॥**

**किमिति,** १—प्रायः, सुखं किम् आहुः ? २—केशानां विकारं च किमाहुः ? ३—हरेः दयिता प्रिया का ? ४—निशि रात्रौ कथं किंविधा कस्मिंश्च वस्तुनि आभा भवति ? ५—वीलपुलिसाणं वीरपुरुषेभ्यः, को लुच्चइ को रोचते ? अत्र पञ्चमः प्रश्नो मागधभाषया ।

अत्रोत्तरम्—**शमलकं मालम्भे।** संस्कृतोत्तरपक्षे, शम्, अलकम्, मा, अलम्, भे, इति पदच्छेदः । १—सुखं 'शम्' इत्याहुः । २—केशानां विकारं चूर्णकुन्तलानित्यर्थः, 'अलकम्' इत्याहुः । तदुक्तममरे 'अलकाश्चूर्णकुन्तलाः' इति । ३—'मा' लक्ष्मीर्हरेर्दयिता । ४—रात्रौ आभा 'अलम्' अतिशयेन भवति, क्व भवति, 'भे' नक्षत्रे । पञ्चमोत्तरं मागध्या 'शमलकंमालम्भे' समरकर्मारम्भ इत्यर्थः, समरस्य संग्रामस्य कर्म योधनं, तस्यारम्भो वीरपुरुषेभ्यो रोचते ।

अस्यैव द्वितीयं यथा—

**कः स्तम्बेरमसुत इति विख्यातः पृच्छति स्फुटहरिणः ।**
**३ अहिणवणअलीरण्णो असाहुणो केण उज्जडइ ॥५५॥**

**क इति,** १—हरिणः मृगः, पृच्छति, यत् कः स्तम्बेरमस्य [4]हस्तिनः, सुतः पुत्रः, इति विख्यातः ? स्तम्बेरमसुत इति शब्देन क उच्यत-इत्यर्थः । २—असाहुणो-असाधोः, रण्णो राज्ञः, अहिणवणअली-अभिनवनगरी, केण-केन, हेतुना, उज्जडइ—त्यज्यते ।

---

१—'कं वा' इति क्वचित् पाठः ।

२—'को रोचते वीरपुरुषेभ्यः' इति संस्कृतम् ।

३—'अभिनवनगरी राज्ञोऽसाधोः केन त्यज्यते' इति संस्कृतम् ।

४—इभः स्तम्बेरमः पद्मी इति हस्तिनामस्वमरः । "स्तम्बकर्णयो रमिजपोः" इति सप्तम्यन्तस्तम्बोपपदाद् रमेरप् , सप्तम्या अलुक् ।

अत्रोत्तरम्-**कलभ एण**। १—हे एण ! हे मृग ! कलभः स्तम्बेरम इति विख्यातः, तदुक्तममरे 'कलभः करिशावकः' इति। २—कलभएण-कारं करात् राजदेयभागाद् भयेन, राज्ञो नगरी त्यज्यते। इदं मागधभाषयोत्तरम्।

इति संस्कृतमागधजातिः।

अथ संस्कृतपैशाचिकचित्रमुदाहरति—

**कोपारुणं किमरुणाग्रसरस्य पूर्व-**
**काष्ठाग्रनिष्ठिततनोरुपमानपात्रम्।**
**१पत्तं खणेण मरणं सअरस्स रण्णो**
**पुत्तेहिं किं पविसिउण्ण तुरङ्गमत्थम्॥५६॥**

**कोपारुणमिति**, १—कोपेन, अरुणम् आरक्तं किं वस्तु, अरुण गरुडाग्रजः, अग्रसरः सारथित्वाद् अग्रगामी यस्य तस्य, पूर्वस्याः काष्ठाया दिशः, अग्रे निष्ठिता निःशेषेण स्थिता तनुः यस्य तथोक्तस्य ताम्रवर्णस्य प्राभातिक सूर्यस्येत्यर्थः, उपमानपात्रं सादृश्ययोगि सदृशमस्ति ? २—सअरस्स सगरस्य, रण्णो राज्ञः, पुत्तेहिं पुत्रैः, तुरङ्गमत्थम् तुरङ्गमार्थम्—अश्वमेधीयाश्वस्य प्राप्त्यै, पविसिउण्ण प्रविश्य, खणेण क्षणेन, मरणं मृत्युः, पत्तं प्राप्तम् ?

अत्रोत्तरम्—**कपिलपनम्**। १—कोपारुणं कपेर्वानरस्य लपनं मुखं प्राभातिकारुणसूर्यसादृश्ययोगि। २—'कपिलपनम्' कपिलवनम् कपिल तदाख्यस्य मुनेः, वनम् आश्रमं प्रविश्य, सगरसुतैः मृत्युराप्तः। द्वितीयं पैशाचिकभाषया।

अस्यैव द्वितीयं यथा—

**कं प्रीणयन्ति जलदाः सैन्यं कीदृक् पलायते समरात्**
**धत्ते शिरोधरा किं रुद्दशिरं[3] केरिसं भोदि॥५७॥**

---

१—'प्राप्तं क्षणेन मरणं सगरस्य राज्ञः पुत्रैः किं प्रविश्य तुरङ्गमार्थम्' इति संस्कृतम्।

२—'दिशस्तु ककुभः काष्ठाः' इत्यमरः।

३—'रुद्रशिरः कीदृशं भवति' इति संस्कृतम्।

**कमिति,** १—जलदा मेघाः, कं प्रीणयन्ति तर्पयन्ति ? २—कीदृक् सैन्यं सेना, समरात् संग्रामात् पलायते ? ३—शिरोधरा ग्रीवा किं धत्ते धारयति ? ४—रुद्दशिरं रुद्रशिरः–रुद्रस्य शिरः, केरिसं कीदृशम्, भोदि भवति ?

अत्रोत्तरम्—**चातकं कातरं कम्।** १—जलदाः चातकं प्रीणयन्ति। २—कातरं भीरु सैन्यं समरात् पलायते। ३—शिरोधरा 'कम्[1]' शिरः, धत्ते। ४—रुद्दशिरं 'चातकंकातरंकम्' जातगङ्गातरङ्गम्—जाता गङ्गायास्तरङ्गा यत्र तादृशं भोदि। चतुर्थमुत्तरं पैशाच्या।

इति संस्कृतपैशाचिकजातिः।

**को वर्णाद्यः क्व जलधिसुता कं च दीर्घादिसंज्ञं**
**प्राहुर्बुद्धः कमजयदसौ तार्किकैः के क्रियन्ते।**
**आमन्त्र्यो विः कथय विदितं किं पदं हेतुवाचि**
**जा[2] णच्चेउं महइ महिला[3] सावि वोल्लेइ कीसम् ॥५८॥**

**क इति,** १-वर्णेषु अकारादिषु, आद्यः प्रथमः, कः ? २–जलधेः समुद्रस्य, सुता पुत्री, क्व वसति ? ३—दीर्घादि ( आदिपदेन प्लुतोऽपि ) संज्ञा यस्य तं दीर्घप्लुतसंज्ञं कं प्राहुः ? ४--असौ अतीतः प्रसिद्धो वा बुद्धः कम् अजयत् ? ५—तार्किकैः तर्कशास्त्रविद्भिः के क्रियन्ते ? ६—विः पक्षी, आमन्त्र्यः संम्बोधनीयः, ७—हेतुवाचि हेतुबोधकं पदं किमिति कथय? ८— जा–या, महिला-स्त्री, णच्चेउं-नर्तितुम्, महइ-वाञ्छति, ईहत इति कुञ्चिकाकारः, सावि-सापि, कीसं-कीदृग्, वोल्लेइ-वदति ?

अत्रोत्तरम्—**अएचस्मारं वादा वेहि।** १—'अः' वर्णानाम् आद्यः, २—'ए' विष्णौ विष्णोर्वक्षसीत्यर्थः, जलधिसुता निवसति। विष्णुवाचकस्य अशब्दस्य सप्तम्येकवचने 'ए' इति रूपम्। ३—'एचम्' ए, ओ, ऐ, औ, इमान् वर्णान् दीर्घप्लुतान् आहुः, एचां ह्रस्वाभावात्। अथवा

---

१—'सुखशीर्षजलेषु कम्' इति मेदिनी।

२—'या नर्तितुं वाञ्छति महिला सापि वदति कीदृशम्' इति संस्कृतम्।

३—'मिहिला' इति क्वचित् पाठः।

'अचम्' इत्येवं छेदः कर्तव्यः, प्रश्ने च आदिपदेन ह्रस्वप्लुतौ ग्राह्यौ। तथाच 'अचम्' अच्प्रत्याहारबोध्यवर्णसमुदायं ह्रस्वदीर्घप्लुतसंज्ञं प्राहुः। तदुक्तं पाणिनिना "ऊकालोऽज्झ्रस्वदीर्घप्लुतः" इति। ४—बुद्धो 'मारम्' कामम् अजयत्। तार्किकैः 'वादाः' तत्त्वनिर्णयार्थं पूर्वपक्षोत्तरपक्षात्मिकाः कथाः क्रियन्ते। ६—विशब्दस्य सम्बोधने 'वे' इति रूपम्। ७—हेतुवाचकं पदं '[1]हि' इति। अष्टमप्रश्नोत्तरं तु लौकिकभाषया—**अए चम्मारं वादावेहि** 'अये मृदङ्गं (चम्मारम्) वादय' इति संस्कृतम्।

अस्यैव द्वितीयमुदाहरणं यथा—

**शब्दः कः स्यात् पुरुषवचनः कुण्डलौ कौ स्मरारेः**
**कामम्भोधेर्हरिरुदहरद् वीवधः पृच्छतीदम्।**
*** हांडी[2] कुण्डी अणेसि[3] ण घरे कीस अस्मार[4] अत्थम्[5]**
**जे[6] पुच्छिल्ला स उँण[7] परिहा उत्तरं[8] कीस देई॥ ५१॥**

**शब्द इति** १—पुरुषवचनः पुरुषवाचकः शब्दः कः स्यात्? २—स्मरारेः शिवस्य कुण्डलौ कर्णाभरणे कौ स्तः? ३—वीवधः भारः, इदं पृच्छति यत् हरिः अम्भोधेः समुद्रात्, काम्, उदहरत् उद्धृतवान्? ४—घरे गृहे अस्मारअत्थम्-अस्मदर्थम्, हांडी मृण्मयं रन्धनपात्रम्, कुण्डीं प्रस्तरनिर्मि...

---

१—'हि हेतावधारणे' इत्यमरः।

* 'मृण्मयस्थाली (हांडी) कुण्डीम् आनयसि न गृहं कथमस्मदर्थं (इति) यः पृष्टः स पुनः परिहारोत्तरं कीदृग् ददाति' इति संस्कृतम्।

२—हण्डीति क्वचित् पाठः।

३—'आणेसि' इति क्वचित्।

४—'अह्मार' इति क्वचित्।

५—'एत्थम्' इति ताराचन्द्रः।

६—'जो' इति कुञ्जिकाकृत्।

७—'पुण' इति क्वचित्।

८—'परिहारुत्तरम्' इति कुञ्जिकाकारस्वीकृतः पाठः।

कुण्डिकाम्, कीस-कस्मात् कारणात्, ण अणसि-नानयसि, इत्येवं जे यः पुच्छिल्ला-पृष्टः, स उण-स पुनः, कीस-कीदृशम्, परिहाउत्तरम्-परिहारोत्तरम्, देइ-ददाति ?

अत्रोत्तरम्--नाहीकुंभार। १—'ना' इति पुरुषवाचकः शब्दः। २—'अही' सर्पौ स्मरारेः कुण्डलौ। ३—हे 'भार ! कुम्' पृथ्वीं हरिः समुद्राद् उदहरत्, इति वीवधं प्रति तत्प्रश्नस्योत्तरं। चतुर्थोत्तरं तु लौकिकभाषया 'नाही कुंभार' इति। नास्ति कुम्भकार इति हेतोः त्वदुक्तानि पात्राणि नानीतानीत्यर्थः। कुम्भकारो हि मृण्मयपात्राणि निर्मिमीते।

इति संस्कृतलौकिकजातिः

इत्थं चित्रजातीर्निरूप्येदानीं तत्तद्भाषायाः शुद्धान् प्रश्नोत्तरभेदानाह। तत्र पूर्वं शुद्धप्राकृतमुदाहरति—

**[1]को णिवसइ सच्छन्दं सुंदरि गिरिगहणकुंजमज्झम्मि।**
**सह अज्जुणेण जोज्झुं सिहिगमणो केरिसो होइ॥ ६०॥**

**को इति,** १—हे सुंदरि, गिरिगहणकुञ्जमज्झम्मि—गिरिगहनकुञ्जमध्ये गिरीणां पर्वतानाम्, ये गहना दुष्प्रवेशाः, कुञ्जाः लतादिपिहितप्रदेशाः, तेषां मध्ये, को–कः, सच्छन्दं-स्वच्छन्दं—यथेच्छं णिवसइ-निवसति ? २—अज्जुणेण अर्जुनेन, सह, जोज्झुं योद्धुं, सिहिगमणो शिखिगमनः शिखी मयूरः, गमनं गमनसाधनं वाहनं यस्य स कार्तिकेयः, केरिसो कीदृशः होइ भवति ?

अत्रोत्तरम्--[2]**सरभससवराहवग्गः**। प्रथमोत्तरे 'सरभ-शश-वराहवर्गः' इति संस्कृतम्। सरभाः, शशाः मृगविशेषाः; वराहाः शूकराः, तेषां वर्गो गिरिकुञ्जेषु निवसति। द्वितीयोत्तरे 'सरभस-शबराहवाग्र्यः' इति संस्कृतम्। रभसो वेगः क्रोधो वा, तत्सहिताः सरभसाः, ये शबराः किराताः, तेषाम् आहवे संग्रामे, अग्र्यः मुख्यः, शबरसेनानायको भूत्वा कार्तिकेयोऽर्जुनेन सह युयुधे इत्यैतिह्यम्।

---

१—'को निवसति स्वच्छन्दं सुन्दरि गिरिगहनकुञ्जमध्ये। सहार्जुनेन योद्धु शिखिगमनः कीदृशो भवति'। इति संस्कृतम्। २—'सरहससवराहवग्गः' इति क्वचित् पाठः।

अस्यव द्वितीयं यथा—

[१]का हरइ मणं पइणो गुणगणजोव्वणसलाहणिज्जस्स।
कइचडचडेति सद्दा हुआसणा केरिसा होंति ॥९१॥

**का इति,** १—का कतमा स्त्री, गुणगणजोव्वणसलाहणिज्जस्स—गुणगणयौवनश्लाघनीयस्य—गुणगणेन दाक्षिण्यादिगुणसमुदायेन, यौवनेन तारुण्येन च श्लाघनीयस्य प्रशंसनीयस्य, पइणो-पत्युः, मणं-मनः, हरइ-हरति वशीकरोति! २—कइचडचडेतिसद्दा—कृतचटचटेतिशब्दाः—चटचेटेतिशब्दयुक्ताः, हुआसणा-हुताशना अग्नयः, केरिसा कीदृशा होंति भवन्ति ?

अत्रोत्तरं **सरिसवहुआ**। तत्र प्रथमोत्तरं 'सरिस-वहुआ' सदृश-वधूका इति संस्कृतम्। सदृशी वधूः सदृशवधूका, स्वार्थे कः, अनुरूपा वधूः पत्युर्मनोहरति। द्वितीयमुत्तरं 'सरिसव--हुआ' सर्षप-हुता इति संस्कृतम्। सर्षपैः हुताः अग्नयः चटचटा कुर्वन्ति।

इति शुद्धप्राकृतजातिः।

अथ शुद्धापभ्रंशमुदाहरति—

[२]पाणिग्गहणणिअंसणु सोहइ केहिँ मण्डिअं।
साहय बहुवीर पइणो रिउबलं केहिँ खण्डिअं ॥९२॥

**पाणीति,** १—पाणिग्गहणणिअंसणु—पाणिग्रहणनिवसनम्—पाणिग्रहणनिवसनं वस्त्रम्, केहिँ-कैः, मण्डिअं मण्डितं भूषितं सत्, सोहई शोभते ? २—बहुवीरपइणो—बहुवीरपतेः-बहुश्चासौ वीरः, स चासौ पतिश्च, तस्य अतिवीरस्य स्वामिनः, अथवा बहूनां वीराणां पत्युः इति व्याख्येयम्। रिउबलं रिपुबलं शत्रुसैन्यम्, केहिँ कैः, खण्डिअं खण्डितं पराभूतम्, इति साहय साधय कथयेत्यर्थः।

अत्रोत्तरम्--**समरंगणेहिँ**। प्रथमोत्तरे 'समरञ्जनैः' इति संस्कृतम्, समैः अनुरूपै रञ्जनद्रव्यैः कुसुम्भादिभिर्मण्डितं ( रञ्जितम् ) विवाहवसनं शोभते। द्वि-

---

१—'का हरति मनः पत्युः गुणगणयौवनश्लाघनीयस्य। कृतचटचटेति शब्दा हुताशनाः कीदृशा भवन्ति। इति संस्कृतम्।

२—पाणिग्रहणनिवसनं शोभते कैर्मण्डितम् साधय बहुवीरपते रिपुबलं कैः खण्डितम्।

योत्तरे 'संग्रामगयैः' इति संस्कृतमिति ताराचन्द्रः । बहुभिः संग्रामैरित्यर्थः । क्वचित् पुस्तकेषु 'संग्रामाङ्गणैः' इति संस्कृतपाठो लभ्यते । तस्यायमर्थः--संग्रामाङ्गणानि संग्रामभूमयः, तैरित्यर्थः, हेतौ करणे वा तृतीया, शत्रुहनने संग्रामाङ्गणमप्येकतमत् साधनं भवत्येव । तद् विना संग्रामासंभवात् ।

अस्यैव द्वितीयं यथा—

[1]रसिअहु केण उचाडणु किज्जइ ।
जुअइमाणसं केण उविज्जइ ॥
तिसिअलोअ खणि केण सुहिज्जइ ।
[2]एहि पहू महु तिअणे गिज्जइ ॥६३॥

रसिअहु इति, १--रसिअहु-रसिकस्य जनस्य, केण–केन हेतुना, उचाडणु उच्चाटनम् चित्तोद्वेगः, किज्जइ-क्रियते ? २—जुअइमणसं-युवतिमानसम्, केण-केन कारणेन, उविज्जइ उद्विजते खिद्यते ? ३—तिसिअलोअ–तृषितलोकः–पिपासाकुलो जनः, खणि-क्षणम् , केण-केन साधनेन, सुहिज्जइ–सुखी क्रियते ? एहि-एष पूर्वोक्तः, महु मम, पहू प्रश्नः, तिअणे भुवने, गिज्जइ गीयते ।

अस्योत्तरम्—**नीरसराएण** । प्रथमोत्तरे 'नीरस-रागेण' इति संस्कृतम् । रसशून्यरागेण रसिकस्योचाटनं क्रियते । द्वितीयोत्तरेऽपि 'नीरसरागेण' इत्येव संस्कृतम्, परं समासो भिद्यते । निर्गतः, रसे शृङ्गारे, रागः अनुरागो यस्मात् तेन काष्ठकुड्याश्मसन्निभेन नरेण युवतिमानसमुद्विग्नं भवति । तृतीये तु नीरशरावेण [ नीर–सराएण ] इति संस्कृतम् । नीरं जलम्, तत्पूर्णेन शरावेण मृत्पात्रेण, तृषार्तः सुखी क्रियते ।

इति शुद्धापभ्रंशजातिः ।

अथ शुद्धमागधिकमुदाहरति—

[3]सुअलो मेहं पुच्छइ पुच्छइ मेहो वि तं तहा सुअलम् ।

---

१—रसिकस्य केनोच्चाटनं क्रियते, युवतिमानसं केन उद्विजते ।
तृषितो लोकः क्षणं केन सुखी क्रियते, एष प्रश्नो मम भुवने गीयते-इति संस्कृतम् ।

२—एष चतुर्थपादः केषु चित् पुस्तकेषु नोपलभ्यते ।

३—शूकरो मेघं पृच्छति पृच्छति मेघोऽपि तं तथा शूकरम् ।

[1]केण हआ सअलसुआ केण जणो विसइ पाआलम् ॥६४॥

**सुअलो इति,** सुअलो शूकरः, मेहं मेघम्, पुच्छइ पृच्छति, तहा तथा, मेहोवि मेघोऽपि, तं सुअलं शूकरम्, पुच्छइ पृच्छति, (यत्) सअलसुआ सगरसुताः सगरस्य राज्ञः सुताः पुत्राः, केण केन पुरुषेण, हआ हताः ? जणो जनः, केण केन मार्गेण, पाआलं पातालम्, विसइ विशति ?

अत्रोत्तरम्—**वलाहकविलेण** । प्रथमः प्रश्नः शूकरस्य मेघं प्रति, तदुत्तरं 'वलाह ! कविलेण' इति । हे 'वराह ! कपिलेन' सगरस्य सुता हताः इति भावः । द्वितीयः प्रश्नो मेघस्य शूकरं प्रति, तदुत्तरम्—'वलाहक ! विलेण' इति, हे वलाहक हे मेघ ! विलेण विलेन भूमिविवरेण, नरः पातालं विशति—इत्यर्थः ।

अस्यैव द्वितीयं यथा—

[2]धवलुज्जलेहिं केहिं सोहइ धरणी मसाणदेसस्स ।
णिलअस्स रक्खपाला केहिं पलवेटिआ होंति ॥ ६५ ॥

**धवलु इति,** १—मसाणदेसस्स, श्मशानदेशस्य धरणी पृथ्वी, धवलुज्जलेहिं धवलोज्ज्वलैः धवलैः-श्वेतैः, उज्ज्वलैः स्वच्छैश्च, केहिं कैः पदार्थैः, सोहइ शोभते ? २—णिलअस्स निरयस्य नरकस्येत्यर्थः, रक्खपाला रक्षकाः, केहिं कैः, पलवेटिआ परिवेष्टिता भवन्ति ?

अस्योत्तरम्—**नलकलंकेहि** । प्रथमप्रश्नोत्तरं 'नल-कलङ्केहि' इति । 'नरकरङ्कैः' इति तत्संस्कृतम्, नराणां मृतपुरुषाणां करङ्कैः अस्थिपञ्जरैः श्मशानभूमिः शोभते । मांसादिशून्यतया करकाणां धवलोज्ज्वलत्वम् । द्वितीयोत्तरं—'नलक–लंकेहि' इति 'नरक–रङ्कैः' इति च तत्संस्कृतम् । नरकस्य [3]रङ्का मल्लाः, तैः, नरकरक्षकाः, वेष्टिता भवन्ति ।

इति शुद्धमागधिकम् ।

---

[1]केन हताः सगरसुताः केन जनो विशति पातालम् ॥

२—धवलोज्ज्वलैः कैः शोभते धरणी श्मशानदेशस्य ।
निरयस्य रक्षकाः कैः प्रतिवेष्टिता भवन्ति ॥

३—रङ्कस्तु कृपणे मल्ले चेति विश्वः ।

[1]वैरी पुच्छइ ककणे रोचइ कसणो घणो केहिं ।
सच्चाइ ण केहिं समत्थंति सच्चं णिहितं कताइपि ॥ ६६ ॥

**वैरीति,** १—वैरी शत्रुः, पुच्छइ पृच्छति, (यत्) ककणे गगने, कसणो कृष्णः श्यामवर्णः, घणो घनः मेघः, केहिं कैः पदार्थैः, रोचइ-रोचते शोभते इत्यर्थः ? २—सच्चं सत्यम्, णिहितं निश्चितं चेत्येवं विश्वासयितुं कताइपि कृतान्यपि, सच्चाइ सत्यानि शपथादीनि, केहिं कैः पुरुषैः, ण न, समत्थंति समर्थ्यन्ते अनुमोद्यन्ते ?

अत्रोत्तरम्—**अहितवकेहि**। प्रथमोत्तरे 'अहित ! वकैः' इति संस्कृतम्। हे अहित ! हे शत्रो ! वकैः बकपङ्क्तिभिः गगने कृष्णमेघः शोभते। वर्षासु मेघाच्छन्ने वियति बकपङ्क्तय उड्डीयन्ते। द्वितीयोत्तरे—'अहितपक्षैः' इति संस्कृतम्। अहिताः शत्रवः, तत्पक्षप्रविष्टैः पुरुषैः सत्यमपि न समर्थ्यते।

अस्यैव द्वितीयं यथा—

पत्तूण [2]किं फडअणो णिधणे हताणं
अद्धासणं फचति चंफणिसूअणस्स ।
भोत्तूण खोरतरतुक्खसआइ पावा
मोहंधकारकरणं लय किं लहन्ति ॥ ६७ ॥

**पत्तूण इति,** १—णिधणे निधने संग्रामे, हताणं हतानां (मध्ये स्थितः) फडअणो भटजनः-योद्धा, किं वस्तु, पतूण प्राप्य, चंफणिसूअणस्स जम्भनिषूदनस्य जम्भासुरहन्तुरिन्द्रस्य, अद्धासणम् अर्धासनम्—आसनस्य राजसिंहासनस्य, अर्द्धम् अर्द्धभागम्, भजति प्राप्नोतीत्यर्थः ? २—पावा पापाः पापिनो जनाः, खोरतरतुक्खसआइ घोरतरदुःखशतानि—घोरतराणाम् अतिशयेन भयङ्कराणाम्,

---

१—वैरी पृच्छति गगने रोचते कृष्णो घनः कैः ।
सत्यानि न कैः समर्थ्यन्ते सत्यं निश्चितं कृतान्यपि ॥

२—प्राप्य किं भटजनो निधने हतानाम् अर्धासनं भजति जम्भनिषूदनस्य । भुक्त्वा घोरतरदुःखशतानि पापाः, मोहान्धकारकरणं लप किं लभन्ते ॥ इति संस्कृतम् ।

दुःखानां शतानि, भोत्तूण भुक्त्वा, मोहंधकारकरणं मोहान्धकारकरणं मोहो वैचित्त्य-मेवान्धकारः, तत्करणं तत्साधनम्, किं लहन्ति लभन्ते, इति लय लप कथय।

अत्रोत्तरम्—**विसमरम्** । प्रथमोत्तरे 'विषम-रणम्' इति संस्कृतम्। विषमम् अतिकठिनं रणं संग्रामं प्राप्य योद्धृजनः इन्द्रासनस्यार्धभागं लभते स्वर्गं गच्छतीतिभावः, संग्रामे मृत्युमुपगतानां स्वर्गप्राप्तिः धर्मशास्त्रे प्रसिद्धैव। द्वितीयोत्तरे 'विष-मरणम्' इति संस्कृतम्। विषेण मरणमित्यर्थः । पापिनः खलु स्वकर्मकृत-दुःखजालनिपतितास्तदसहिष्णवो विषादिनात्मघातं कुर्वते ।

इति शुद्धपैशाचिकम् ।

अथैकेन शुद्धलौकिकमुदाहरति—

[1]जा णी आणइ णिंदे भिंभला
सा किस वुच्चइ वोल्ल रे सैंभरि ।
जो तिलसरिसव पीडइ जाणी
कीस भणिज्जइ सो विण्णाणी[2] ॥ ६८ ॥

**जाणीति**, १—रे सैंभरि संभलि हे कुट्टनि, णिंदे निद्रया, भिंभला विह्वला, जा या, स्त्री, णी आणइ न-जानाति, सा स्त्री, किस कीदृग्, वुच्चइ उच्यते, इति वोल्ल वद । जो यः पुरुषः, तिलसरिसव तिलसर्षपान्, पीडइ पीडयितुम्, जाणी जानाति, सो सः, विण्णाणी विज्ञानी पुरुषः, कीस कीदृग् भणिज्जइ भण्यते ?

अत्रोत्तरम्—**सुत्ते** १ । प्रथमोत्तरे 'सुप्ता' इति संस्कृतम्। सुप्ता शयिता स्त्री निद्रावशान्न किमपि चेतति । द्वितीयोत्तरे 'सुतैली' इति संस्कृतम्। शोभनचतुरस्तैलकार इत्यर्थः ।

इति शुद्धलौकिकम् ।

---

१—या न जानाति निद्रया विह्वला सा कीदृगुच्यते वद रे संभलि। यस्तिलसर्षपान् पीडयितुं जानाति कीदृशो भण्यते सोपि विज्ञानी। इति संस्कृतम्।

२—'विसाणी' इति क्वचित् पाठः ।

अथोपसंहरति——

**एतावतापि दिङ्मात्रं प्रश्नानां दर्शितं मया ।**
**येन येन हि माद्यन्ति तद्विदस्तत्तदूह्यताम् ॥ ६१ ॥**

**इति बौद्धश्रीधर्मदासविरचितविदग्धमुखमण्डनाख्य-**
**काव्यालङ्कारशास्त्रे तृतीयः परिच्छेदः ।**

---

**एतावतेति,** मया, एतावतापि ( एतच्छब्दात् परिमाणे वतुः ) इयद्दीर्घ-परिच्छेदेनापि, प्रश्नानाम्, दिङ्मात्रम्, दिक्—रीतिः प्रकार इति यावत्, तन्मात्रं प्रदर्शितम्, न तु ईदृक्ता इयत्ता वा प्रश्नानां निर्णीता । तथा च तद्विदः प्रश्न-पण्डिता येन येन यद्यत्प्रकारकैः प्रश्नैर्माद्यन्ति हृष्यन्ति, बुद्धिमद्भिस्तत्तत् स्वयमेव, ऊह्यताम् ।

इति श्रीपरमेश्वरानन्दशर्मकृतायां विदग्धमुखमण्डनव्याख्यायां—
तृतीयः परिच्छेदः ।

---

१—'सुत्तेल्ली' इति क्वचित् पाठः ।

# चतुर्थः परिच्छेदः

तत्र पूर्वं प्रहेलिकां लक्षयति,

**व्यक्तीकृत्य कमप्यर्थं स्वरूपार्थस्य गोपनात् ।**
**यत्र बाह्यान्तरावर्थौ कथ्येते सा प्रहेलिका ॥ १ ॥**

**व्यक्तीति,** यत्र प्रश्नवाक्ये, कमपि, अविवक्षितमर्थम्, व्यक्तीकृत्य स्वरू- र्थस्य विवक्षितार्थस्य गोपनाद् निगूहनात्, बहिर्भवो बाह्यः अविवक्षितः, अन्त- हृदि भवः—आन्तरः, तावर्थौ कथ्येते सूच्येते, तत् 'प्रहेलिका' इत्युच्यते। अ- बाह्यान्तरार्थसूचनं सभङ्गेनाभङ्गेन वा श्लेषेण भवेत्, यत्र सभङ्गेन श्लेषेण सा शा- प्रहेलिका, जतुकाष्ठन्यायेन तत्र शब्दयोरेव श्लिष्टत्वात्, यत्र पुनरभङ्गश्लेषः सा प्रहेलिका, तत्रैकवृन्तगतफलद्वयन्यायेन अर्थयोरेव श्लेषः ।

इममेवार्थमाग्रिमया कारिकयाह—

**सा द्विधार्थी च शाब्दी च विख्याता प्रश्नशासने ।**
**आर्थी स्यादर्थविज्ञानाच्छाब्दी शब्दविभागतः[1] ॥२॥**

**सेति,** प्रश्नशासने प्रश्नशास्त्रे, सा प्रहेलिका, आर्थी च शाब्दी चेति द्वि- द्विप्रकारा, विख्याता । तत्र अर्थविज्ञानाद् आर्थी स्यात्, शब्दविभागतः शब्द- विश्लेषतश्च शाब्दी स्यात् । अन्यथाप्यनयोः शाब्दीत्वमार्थीत्वं च व्यवस्थापयि- शक्यते, यत्र प्रश्न उत्तरे च शब्दाः पर्यायपरिवृत्यसहा सा शाब्दी, यत्र तु पर्याय- परिवृतिसहाः सा आर्थी । एषैव च रीतिः शब्दार्थालङ्कारेषु मम्मटभट्टादि- रभ्युपगता ।

अथोदाहरति—

**तरुण्यालिङ्गितः कण्ठे नितम्बस्थलमाश्रितः ।**
**गुरूणां सन्निधानेऽपि कः कूजति मुहुर्मुहुः ॥३॥**

**तरुण्येति,** तरुण्या युवत्या स्त्रिया, कण्ठे ग्रीवायाम्, आलिङ्गि-

---

१—शब्दविभक्त इति क्वचित् पाठः ।

आश्लिष्टः ( आन्तरार्थस्तु बाहुना कण्ठमावेष्ट्य धृतः ) नितम्बस्थलं कटिपश्चाद् भागम् आश्रितः, गुरूणां वयोवृद्धानां मातापित्रादीनाम् ( आन्तरार्थस्तु स्थौल्ययुक्तानां नितम्बानाम् ) सन्निधाने सामीप्येऽपि, मुहुर्मुहुः भूयोभूयः, कः कूजति मञ्जु शब्दायते ?

अत्र यद्यपि 'तरुण्यालिङ्गितः कण्ठे' इति विशेषणेन 'वल्लभः' इत्यर्थः आपाततः प्रतीयते, परं न सोऽत्र विवक्षितः । युवतीनितम्बमाश्रित्य वल्लभस्य गुरुजनसन्निधाने कूजनासङ्गतेः । अत इतर एवार्थोऽत्र विवक्षितः, स च **'पानीयकुम्भः'**, स हि जलमाहर्तुं जलाशयमुपेतया युवत्या बाहुमूले कण्ठमावेष्ट्य धार्यमाणः ईषदूनतया चलनसमये जलक्षोभेण कूजति । इयं चार्थी प्रहेलिका ।
अस्या एव आर्थ्याः प्रहेलिकाया द्वितीयमुदाहरणं यथा—

**आपाण्डुपीनकठिनं वर्तुलं सुमनोहरम् ।**
**करैराकृष्यतेऽत्यर्थं किं वृद्धैरपि सस्पृहम् ॥ ४ ॥**

**आपाण्डुविति**, आपाण्डु ईषत्पीतवर्णम्, पीनं स्थूलम्, कठोरम्, वर्तुलं वृत्ताकारम्, सुमनोहरम् अतिशयेन चित्ताकर्षकम्, किं वस्तु, वृद्धैः जराक्रान्तैः पुरुषैरपि, सस्पृहम् साभिलाषम्, अत्यर्थम् अतिशयेन, करैः हस्तैः, आकृष्यते ? ।

अत्रापाततो युवत्याः कुचयुगलमिति बाह्योऽर्थः प्रतीयते, आपाण्डुत्वादीनां पञ्चानामपि विशेषणानां तत्र सम्भवात् । परं न तदत्र विवक्षितम्, गलितकामवासनैर्वृद्धैरत्यर्थं तदाकर्षणस्यानैसर्गिकत्वाद्, अतोऽपर एवात्र हृदिस्थितोऽर्थः, स च **'पक्वबिल्वफलम्'** अस्ति । तस्याप्यापाण्डुत्वादिविशिष्टत्वाद्, माधुर्यवत्त्वाद् वृद्धैरपि भक्षणार्थं शिवपूजार्थं वा तदाकर्षणस्य संगतेश्च ।
अथ शाब्दीं प्रहेलिकां द्वाभ्यामुदाहरति—

**दुर्वारवीर्य[1] ! सरुषि त्वयि का प्रसुप्ता**
**श्यामा सपत्नहृदये सुपयोधरा च ।**
**तुष्टे पुनः प्रणतशत्रुसरोजसूर्ये**
**सैवाद्यवर्णरहिता वद नाम का स्यात् ॥ ५ ॥**

---
१—वृत्त इति क्वचित् पाठः ।

**दुर्वारेति,** १--दुर्वारं दुरतिक्रमम्, वीर्यं पराक्रमः, यस्य तत्सम्बोधने हे दुर्वार-वीर्य ! त्वयि भवति, सरुषि सक्रोधे सति, सपत्नानां शत्रूणां हृदये, श्यामा षोडश-वार्षिकीति बाह्योऽर्थः, कृष्णवर्णा इति विवक्षितार्थः, सुपयोधरा सुस्तनी चेति बाह्योऽर्थः, सुष्ठु पयसो जलस्य धारायाः कान्ते र्वा, धरा धारिका चेति विवक्षितार्थः । का व्यक्तिः प्रसुप्ता शयितेति बाह्योऽर्थः, स्थितेति विवक्षितार्थः ? पुनः प्रणतानां नम्रीभूतानां शत्रूणामेव सरोजानां कमलानां सूर्ये प्रभाकरे ( यथा सूर्यः कमलानि विकासयति तथैव त्वमपि प्रणतान् स्वशत्रून् तदपराधक्षमणादिना हर्षयसीति भावः ) त्वयि, तुष्टे सति, आद्येन वर्णेन रहिता सैव श्यामा सुपयोधरा च का नाम शत्रुहृदये प्रसुप्ता स्याद् इति वद ।

अत्र प्रथमप्रश्नोत्तरं यद्यप्यापाततः 'स्त्री' इति प्रतीयते, परं न तत् विवक्षितम्, प्रबले शत्रौ सक्रोधे सति चिन्तातुराणां स्त्रीविहारस्यानुदयात् 'शस्त्री'१ छुरिका इति तु हार्दमुत्तरम् । यतः सापि लोहमयत्वात् कृष्णवर्णा, सु-(पयसः)धारायाः कान्तेर्वा धारिका च, लोके खड्गस्य धारायां कान्तौ वा जलशब्द-प्रयोगात् । अथवा 'जल घातने' इति जलधातोः 'घञर्थे कविधानम्' इति कप्रत्यये निष्पन्नोऽयं जलशब्दः । घातनं च तैक्ष्ण्यम् इति व्याख्यातारः, तथा च सुपयो-त्यस्य तैक्ष्ण्ययुक्तेत्यर्थः । एवं श्यामत्वादिविशेषणविशिष्टा 'शस्त्री' सपत्नहृदये निखाता भवति इति प्रथमोत्तरम् । २—अस्मादेव शस्त्रीशब्दादादिवर्ण-शकारस्यापहारेण 'स्त्री' इति द्वितीयप्रश्नोत्तरमवशिष्यते । यतश्च सैव स्त्री षोडशवार्षिकी, सुपयोधरा सुस्तनी च, त्वयि प्रसन्ने निर्भयानां तव शत्रूणां हृदि शयितुं घटते । एषा च शाब्दी, शब्दपरिवृत्त्यसहत्वात् ।

**सदारिमध्यापि न वैरियुक्ता नितान्तरक्ताऽपि सितैव नित्यम् ।**
**यथोक्तवादिन्यपि नैव दूती का नाम कान्तेति निवेदयाशु ॥६॥**

**सदारीति,** या, सदा, अरीणां मध्येऽवस्थिताऽपि वैरिभिर्न युक्ता, नितान्तं रक्ता रक्तवर्णाऽपि, नित्यं सितैव शुक्लैव, यथोक्तं वदतीति यथोक्तवादिनी, यथा वक्तुं शिक्षिता तथैव वादिन्यपि, दूती संदेशहारिका, नैवास्ति । सा कान्ता कं का नाम ? इति आशु शीघ्रम्, निवेदय ।

---

१—स्यात् शस्त्री चासिपुत्री च छुरिका चासिधेनुका ।

अत्र 'स्त्री' इति प्रश्नपदस्यापाततोर्थः, प्रतीयते। परं न स विवक्षितः, विरुद्धत्वात्। '**सारिका**' इति चास्य विवक्षितोर्थः-तथाहि सदा, रिमध्यापि 'रि' इति शब्दः मध्ये यस्यास्तथाभूतापि, वैरियुक्ता न, नितान्तं गृहस्वामिनि रक्ता अनुरागिण्यपि, सितैव, 'स' इति वर्णः संजातोऽस्या इति सिता सकारवर्णयुक्तेत्यर्थः, तारकादित्वादितच्। 'सा' सकारेण, इता प्राप्ता, इति तृतीयातत्पुरुषो वा। किं च सा यथा शिक्ष्यते तथैव वदति,तिर्यग्योनित्वान्न स्वयं किमपि वक्तुं प्रगल्भते, दूती च न भवति, संदेशाहरणात्। एतादृशी कान्ता 'क' इति वर्णोऽन्ते यस्याः सादृशी '**सारिका**' एव भवति। अत्र यद्यपि जिज्ञासितेऽर्थे रिमध्यतादि न घटते,तस्य शब्दधर्मत्वात्, तथापि शब्दार्थयोरभेदाभ्युपगमेन सर्वं संगच्छते, अत एव 'रामेति द्व्यक्षरं नाम मानभङ्गः पिनाकिनः' इत्याद्यभियुक्तोक्तयः संगच्छन्ते। विस्तरस्तु मञ्जूषादिग्रन्थेभ्योऽवसेयः[१]।

---

१—एतादृश्यः प्रहेलिका हिन्दीभाषायामपि प्रचुराः प्रयुज्यन्ते, 'पहेली' 'बूझ' इत्यादिनामभिश्च व्यवह्रियन्ते। इह काश्चनोदाहरामः।

आर्थी—श्याम वरन पीताम्बर कांधे मुरलीधर नहिं होय।
बिन मुरली वह नाद करत है विरला बूझे कोय ॥१॥ **भौंरा**

,, आना जाना उसका भाए, जिस घर जाए लकड़ी खाए ॥२॥ **आरी**

,, एक राजा की अनोखी रानी, नीचे से वह पीवे पानी ॥३॥
**दिया की बत्ती**

,, आगे आगे बहिना आई, पीछे पीछे भइया।
दांत निकाले बाबा आए बुरका ओढ़े मैया ॥४॥ **भुट्टा**

,, दानाई से दांत उस पै लगाता नहीं कोई।
सब उसको भुनाते हैं पै खाता नहीं कोई ॥५॥ **रुपया**

शाब्दी—आदि कटे से सबको पारे मध्य कटे से सबको मारे।
अन्त कटे से सबको मीठा खुसरू वाको आंखों दीठा ॥६॥ **काजल**

अथ प्राकृतप्रहेलिकामाह—

**णीरसा [1]उणसो बहुगुणवंतउ भमइ णिरन्तर निच्चल [2]होतउ।**
**तरु गिज्जइ ण फलुपतु तसु जो परिजाणइ[3] पावइ[4] सोवि जसु॥**

नीरसः पुनः स बहुगुणवान् भ्रमति निरन्तरं निश्चलो भूत्वा।
तरुरिति गीयते, न फलपत्रे तस्मिन्, यः परिजानाति प्राप्नोति सोऽपि यशः॥
इति संस्कृतम्।

**णीरस इति,** अत्रापाततः प्रतीयमानो विरुद्धोऽर्थः स्पष्ट एव। आन्तरार्थस्तु **गुणरुक्ख** इति, गुणवृक्ष इति तत्संस्कृतं रूपम्। नौकामध्ये निखातः कूपदण्डापरपर्यायः स्तम्भो गुणवृक्षशब्देनाभिधीयते। स हि नीरसः शुष्को भवति, बहुभिर्गुणैः रज्जुभिश्च वेष्टितत्वाद् बहुगुणवांश्च, दृढनिखातत्वात् स्वयं निश्चलोऽपि नैकाभ्रमणेन भ्राम्यन्निव प्रतीयते। तरुवदारोहपरिणाहशालित्वात् तरुः [गुणवृक्षः] इत्युच्यते, शुष्कस्तम्भतया च न तत्र फलपत्राणां संभवः।

द्वितीयमुदाहरणं यथा—

**[5]घरि घरि चल्लइ सअलपिआरी जीवन्ती होइ वैरिणो णारी।**
**खण वज्झइ खण मुच्चइ खण एकल्ली तह जाणह जह जाइ ण पिल्ली॥**

५—गृहे गृहे चलति, सकलप्रिया, जीवन्ती भवति वैरिणो नारी।
क्षणं वध्यते, क्षणं मुच्यते, क्षणमेकाकिनी, तथा जानीत यथा याति न प्रेरिता॥
इति संस्कृतम्।

**घरि घरि इति,** प्रहेलिकार्थः स्पष्ट एव। उत्तरन्त्वस्याः **पासासारी।** 'पाशकशारिः' इति तत्संस्कृतम्। पाशकस्य 'पांसा' इति लोके प्रसिद्धस्य द्यूतक्रीडाविशेषस्य 'शारिः' हस्तिदन्तकाष्ठादिविनिर्मिता गोष्ठिका 'गोटी' इति लोके प्रसिद्धा। सा हि शारिफलस्य गृहे गृहे प्रतिकोष्ठं चलति, सकलानां द्यूतकृतां प्रिया भवति, जीवन्त्येव वैरिणः प्रतिपक्षस्य नारीव वशवर्तिनी भवति।

---

१—'पुण' इति क्वचित् पाठः। 'विसओ' इति च क्वचित्। २—हुत इ, हुंतु, इति क्वचित् पाठौ। ३—'अणइ' इत्यन्यत्र। ४—'पावइ सो जसु' 'पाविइ जगिजस' इति च पाठः।

क्षणं गोष्ठिकान्तरेण बध्यते निरुद्धगतिः क्रियते, क्षणं मुच्यते, अनुकूलग्लह [दांव] निपातेन पुनः प्रचाल्यते, क्षणमेकाकिनी सती प्रेरितापि न चलति ।

इति प्रहेलिका जातिः ।

अथ कालहृद्यादीन् हृद्यप्रश्नभेदान्, अजगूढादीन् गूढप्रश्नभेदांश्चोदाहर्तुमनाः पूर्वं तत्प्रयोजनं वर्णयति—

**काला ( ल ) सारादिकं हृद्यमजमारादि गूढकम् ।**
**विदग्धा दुर्विदग्धानां कुर्वते दर्पशान्तये ॥ ९ ॥**

**कालासारादीति**—कालः समयविशेषो हृद्यः प्रष्टुर्जिज्ञास्यतया हृद्गतो यत्र तत् कालहृद्यं पृष्टम् । एवम् असारः असारत्वं निर्बलत्वं हृद्यं यत्र तदसारहृद्यम् । एवं रागद्वेषहृद्यमपि बोध्यम् । अजः जन्मरहितः शिवः गूढः गोपितो यत्र तद् अजगूढं पृष्टम्, एवं मारः कामदेवो गूढो यत्र तन्मारगूढम् । इमान् कलहृद्यादिप्रश्नान् विदग्धाः सभाचतुराः दुर्विदग्धानां वृथापण्डितमानिनां दर्पशान्तये कुर्वते । अथ क्रमश उदाहरति—

**अनुनेतुं मानिन्या दयितश्चरणे सरागचरणायाः ।**
**यावत् पतितः स तया तत्क्षणमवधीरितः कस्मात् ॥१०॥**

**अनुनेतुमिति**, दयितः प्रियः, अनुनेतुम् अनुकूलयितुम्, सरागचरणायाः—सरागौ यावकरसादिना रक्तिमवन्तौ चरणौ यस्याः तादृश्या मानिन्याः प्रियायाः, चरणे यावत् पतितः, पतितुमारभते, आदिकर्मणि क्तः । तत्क्षणं तया मानिन्या स दयितः कस्माद् हेतोरवधीरितः तिरस्कृतः । प्रसादनार्थं चरणे पततः प्रियस्य विशिष्टहेतुमन्तरेण तिरस्कारानौचित्यात् ।

अत्रोत्तरम्—**रजस्वला यतः** । यतो यस्मात् कारणादहमिदानीं रजस्वलासि, अतोऽस्पृश्याया मम नायं प्रसादकालः इत्यवधीरितः । अत्र ऋतुकाल एव प्रष्टुः प्रष्टव्यतया हृद्गत इतीदं कालहृद्यपृष्टम् ।

अथासारहृद्यमुदाहरति—

**अवलोक्य स्तनौ बध्वा गुञ्जाफलविभूषितौ[1] ।**
**निःश्वस्य रोदितुं लग्ना कुतो व्याधकुटुम्बिनी ॥११॥**

---

१—'विभूषणौ' इति क्वचित्पाठः ।

**अवलोक्येति**, व्याधस्य कुटुम्बिनी स्त्री, गुञ्जाफलैर्विभूषितौ, वध्वाः स्वस्नुषायाः, स्तनौ, अवलोक्य, शोकेन निःश्वस्य च, कुतः कस्मात् कारणात्, रोदितुम्, लग्ना प्रवृत्ता ? ।

अत्रोत्तरम्—**असारस्तनयो यतः** । यतः, तनयः पुत्रः; असारो निर्बलः । यदि बलवानभविष्यत्, तर्हि गजान् निहत्य ततो मौक्तिकान्यादाय स्वस्त्रियाः स्तनावभूषयिष्यत् । अतः स्वपुत्रस्य निर्बलत्वज्ञानमेव व्याधकुटुम्बिन्या रोदने कारणम् । अत्रासारत्वरूपस्योत्तरस्य हृद्गतत्वादसारहृद्यमिदम् 'कालसारादिहृद्यम्', इति पाठे तु उपर्युक्तप्रश्नस्य सारविषयकत्वेप्यसङ्गत्यभावेन सारहृद्यत्वम् अपि सुसमाधेयम् ।

प्राकृतोपनिबद्धं रागद्वेषहृद्यमुदाहरति—

**दरदिट्ठचूपमउलं पिच्छिअ सहि आए[1] विरहिणी सहिअम् ।**
**णमिडं कङ्केल्लितरू[2] चूओ चलणाहदो[3] कत्तो ॥ १२ ॥**

दरदृष्टचूतमुकुलां प्रेक्ष्य सख्या विरहिणीं सखीम् ।
नमितः कङ्केल्लितरुः चूतश्चरणाहतः कृतः ॥१२॥ इति संस्कृतम् ।

**दरेति**, दरम् ईषत्, दृष्टम्, चूतमुकुलं सहकारमञ्जरी, यया ताम्, विरहिणीं सखीं प्रेक्ष्य, सख्या, कङ्केल्लितरुः अशोकवृक्षः, नमितः, चूतश्च सहकारस्तु, चरणेन, आहतः ताडितः कृतः । तत् कुत इति प्रश्नः । अत्रोत्तरम्—विकसितस्य सहकारस्य विरहिणीदुःखदत्वाच्चरणेन ताडनं द्वेषकृतम् । अशोकस्य त्वदुःखदत्वात् नमनं रागकृतम् अत एव इदं रागद्वेषहृद्यम् ।

अथ निषेधहृद्यं प्राकृतेनैवोदाहरति—

**पिच्छन्तमणिमिसच्छं पिच्छिअ बहुआए झत्ति भिक्खअरम् ।**
**दंसिअ कआईं सीसे कत्तो दो जाइ कुसुमाईं ॥ १३ ॥**

प्रेक्षमाणमनिमेषाक्षं प्रेक्ष्य वध्वा झटिति भिक्षाचरम् ।
दर्शयित्वा कृते शीर्षे कुतो द्वे जातिकुसुमे ॥१३॥ इति संस्कृतम् ।

---

१—'याहि' इति क्वचित् ।
२—'तनू' इत्यन्यत्र ।
३—'हओ'—इत्यपरत्र ।

**पिच्छिन्त इति,** वध्वा कया चन स्त्रिया, अनिमेषे निमीलनरहिते अक्षिणी यस्यां क्रियायां यथा भवति तथा, पक्ष्मपातरहितं प्रेक्षमाणम् आत्मानं (वधूम्) पश्यन्तं कंचन भिक्षाचरं भिक्षुकं प्रेक्ष्य कुतः कस्मात् कारणाद् झटिति द्वे जातिकुसुमे दर्शयित्वा शीर्षे शिरसि कृते धृते ? अत्र भिक्षुकाय जातिकुसुमद्वयं प्रदर्श्य शिरसि धारयन्त्या वध्वा एतद्धृदयं यदावयोः कुले एतज्जातिकुसुमे इव धवले पवित्रे, अत आवाभ्यामकार्ये मनो न कर्तव्यम् । यद्यकार्ये प्रवर्तिष्यावहे तदावयोः कुले शिरोवत् कृष्णे सकलङ्के स्याताम् । तथा चात्र निषेधो हृद्यः । ताराचन्द्रादयस्तु 'जातिकुसुमद्वयदर्शनेनारक्तौ सूर्याचन्द्रमसौ सूचितौ, तौ च तथाविधौ सन्ध्यायामेव भवतः, तथा च सन्ध्या समागमकालः, इति वध्वा हृद्यमित्याहुः । परमत्र मते निषेध हृद्यत्वं नास्य पृष्टस्य व्यवतिष्ठते, किन्तु कालहृद्यत्वमेव ।

इति हृद्यजातिः ।

अथ गूढजातिमुदाहरन्नजगूढमुदाहरति—

**रविसुतकृतगोकर्णः श्रुतिविषयगुणाम्बरो वनात्मधरः ।**
**नरकशिरा जगदखिलं चिरमव्यादसमरुक्पाणिः ॥ १४ ॥**

**रविसुतेति,** रवेः सूर्यस्य, सुतः पुत्रः सूर्यसकाशात् कुन्त्यामुत्पन्नः युधिष्ठिराग्रजः कर्णः, अत्र तु श्रोत्रं गृह्यते, तत्र कृतः धृतः, [1]गोकर्णः सर्पः, येन स कर्णकुण्डलीकृतसर्पः, श्रुतिविषयः श्रवणगोचरः शब्दः, गुणो यस्य तद् आकाशम्, अम्बरं वस्त्रं यस्य स नग्नकलेवर इति यावत्, [2]वनं जलम् आत्मा स्वरूपं यस्य तस्य जलपिण्डरूपस्य चन्द्रमसः, धरः धारकः, शशिशेखरः, नराणां [3]कानि शिरांसि, शिरसि यस्य तादृशो धृतनरमुण्डमालः, असमा विषमाः, (अत्र त्रिसंख्याकाः) रुजः रोगाः, (अत्र लौहशूलानि) यत्र तद् असमरुक् त्रिशूलं, तत् पाणौ यस्य स त्रिशूलधरः, महादेवः । अखिलं जगत्, चिरम्, अव्याद्, रक्षेत् । अत्र नेयार्थविशेषणैर्महादेवरूपोर्थः प्रश्नकर्त्रा निगूहितः, अत इदमजगूढं पृष्टम् । अजः अजन्मा महादेवो गूढो यत्रेति तदर्थः ।

---

१—'गोकर्णोऽश्वतरे सर्पे सारङ्गे' इति विश्वः ।
२—'जीवनं भुवनं वनम्' इति जलनामस्वमरः ।
३—'कं शिरोऽम्बुनोः' इत्यमरः ।

अथ मारगूढमुदाहरति—

**कुध्रेनसूप्रीनयनाश्रयाशदग्धोन्मदा दर्दुरहर्षकाले।**
**स्वजन्मभक्षप्रियभोजनाशा नृत्यन्ति भीमानुजगोत्रभाजः॥**

**कुध्रेनेति,** कुं पृथ्वीं धरन्तीति [1]कुध्राः पर्वताः, तेषामिनः स्वामी हिमालयः, तस्माद् [2]सूः सूतिः उत्पत्तिः यस्यास्तां पार्वतीम्, प्रीणातीति तादृशस्य महादेवस्य, नयनं तृतीयनेत्रम्, तस्य [3]आश्रयाशः वन्हिः, तेन दग्धः भस्मीकृतः कामः, तेन उन्मदा उन्मादशालिनः, भीमस्य भीमसेनस्य, अनुजः अर्जुनः (अत्र तु अर्जुनाख्यो वृक्षः) स चासौ गोजः [4]गोः भूमेः सकाशाज्जातः, भूमिरुहः, तं भजन्ति आश्रयन्तीति तादृशा अर्जुनवृक्षस्थिताः, स्वस्माज्जन्म यस्याः सा स्वजन्मा स्वसंततिः, तां भक्षयन्तीति तादृशाः सर्पाः, सद्योजातस्वसन्ततिभक्षणं सर्पजातिरिति लोकतत्त्वविदः। ते [सर्पाः] एव प्रियं भोजनम्, तदश्नन्ति-इति तथाभूताः सर्पाशिनो मयूराः, दर्दुराणां मण्डूकानां हर्षकाले वर्षर्तौ, नृत्यन्ति। पूर्वोदाहरणे केवलोऽज एव निगूहितः, अत्र तु मारो [कामदेवः] ऽपि। किं च 'अजमारादिगूढम्' इत्यत्रादिपदेन मयूरादयः अपि ग्राह्याः, यथात्रैव तृतीयपादे मयूरो निगूहितः, चतुर्थे चार्जुनवृक्षः।

अथ पदगूढस्योदाहरणमाह—

**वाताच्छीतिररिध्रोरं वो हरतान्महासुरीदयितः।**
**वीडब्राड्यानौका वार्वाहाभोऽशमस्तानाः॥ १६॥**

**वाताच्छीति,** वातम् अत्तीति वातात् पवनाशयः शेषः, सः शीतिः शय्या यस्य स शेषशायी, अराः सन्त्यत्रेति अरि-चक्रम्, तद्धरतीति अरिध्रः चक्रधरः, महान्तः असवो यस्य स महासुः महाप्राणः महाबल इत्यर्थः, ई लक्ष्मीः, तस्या दयितो वल्लभः, वीनां पक्षिणाम्, इंट् ईशः, इति वीट् गरुडः, अपां जलानां राड् अधिपः, अब्राट् समुद्रः, तयोर्द्वन्द्वे वीडब्राजौ, यानं वाहनम्, ओकः स्थानम्, तयोर्द्वन्द्वे यानौकसी। वीडब्राजौ यानौकसी यस्य स इति वीडब्राड्यानौकाः गरु-

---

१—'मूलविभुजादिभ्य उपसंख्यानम्' इति कः।

२—सूतेः सूयते वा भावे क्विप्।

३—'आश्रयाशो वृहद्भानुः' इत्यग्निनामस्वमरः।

४—'गौर्नादित्ये बलीवर्दे ......... भूमौ च सुरभावपि' इत्यमरः।

वाहनः समुद्रशायी चेत्यर्थः, वारि जलानि वहतीति वार्वाहो मेघः, तद्वद् आभा यस्य स वार्वाहाभः मेघश्याम इत्यर्थः, अस्तं क्षिप्तम् अनः शकटं शकटासुरो येन स-शकटासुरभञ्जनो नारायणः, वः युष्माकम्, अशम् अकल्याणम्, अरं शीघ्रम्, हरतात् ।

अत्र द्वितीयपादे 'महासुर्यां दयितः महासुरोदयितः' इत्येवं समस्तपदं सर्वतः प्रथमं बुद्धावुपारोहति, परं न तदर्थः प्रकृते संगच्छते, विशेषणान्तरविरोधात् । 'महासुः' 'ईदयितः' इत्येवं पदविभागे तु सुयोजं पद्यम्, तदेवं कविनात्र परम-चातुर्येण 'ई' इति पदं गोपितम् । यस्मिन् विज्ञाते पद्यार्थः स्पष्टं प्रकाशते । इदं पदगूढम् ।

यत्र पद्यस्य त्रयः पादाः प्रकाश्यन्ते, चतुर्थस्तु उक्तपादत्रय एव निगूह्य रच्यते तत्पादगूढम्, तदुदाहरणं यथा—

> दयावान् प्रयतः शुद्धः प्रबुद्धकमलेक्षणः ।
> पापापहास्त्रिभुवनम्-बुद्धः पायादपायतः ॥ १७ ॥

अत्र चतुर्थपादः पादत्रयगतानामेकाद्यङ्काङ्कितानामक्षराणां यथाक्रमं योजनया समुल्लसति । अर्थस्तु सुगमः ।

पादगूढस्य द्वितीयमुदाहरणमाह—

> न सज्जति क्वचिद्दोषे प्रीणाति जगतां मनः ।
> य एकः स परं श्रीमान्-चिरं जयति सज्जनः ॥ १८ ॥

अत्रापि पूर्ववद् एकाद्यङ्काङ्किताक्षराणां यथाक्रमं विन्यसनेन चतुर्थपादः समुल्लसति । श्लोकार्थः सुगमः ।

इदानीमर्थगूढमुदाहरति—

> दृष्टो मया सखि ब्रूहि रोदयित्वा गतोऽद्य माम् ।
> भद्रे कल्याणिनी भूयाः प्राचीं पश्यातिनिर्मलाम् ॥१९॥

दृष्ट इति, हे सखि ! 'अद्य मां रोदयित्वा गतः' दयित इति शेषः इति स्वप्नः मया (नायिकया) दृष्टः, ब्रूहि किमस्य फलं भविष्यतीति । एतच्छ्रुत्वा सखी तां प्रत्युवाच, भद्रे ! कल्याणिनी भूयाः, आशिषि लिङ् । अतिनिर्मलां प्राचीं दिशं पश्य । अयमि

प्रतिश्रुवाणायाः सख्या गूढाभिसन्धिः, यथा गतेऽहनि सायमस्तमुपयन् भगवान् मरीचिमाली प्राचीं वधूं स्वविरहेण संतमसाक्रान्तामकरोत्, परमिदानीं (प्रातः) स्वोदयेन पुनस्तां संभावयति, तथैव त्वमपि त्वद्दयितेन त्वरितमेव संयोक्ष्यसे, मा स्म चिनोऽश्चिन्ताम्। प्राच्या दिशो दर्शनेन, प्राचीसवित्रोरिव युवयोरपि समागमोऽवश्यं जनिष्यत इति सख्या गूढाभिसंहितोऽर्थः।

अस्यैव प्राकृतमुदाहरणं यथा—

**दक्खिण[1] पवणु व्विग्गा सम्मीलइ लोअणाइं पहिअवहू।**
**निउणसही उण ताए[2] कण्णविवरेहिं[3] ढक्केइ[4] ॥ २० ॥**

दक्षिणपवनोद्विग्ना सम्मीलयति लोचने पथिकवधूः।
निपुणसखी पुनस्तस्याः कर्णविवरं स्थगयति ॥२१॥ इति संस्कृतम्।

**दक्खिणेति,** दक्षिणपवनेन दक्षिणस्या दिशः प्रचलता पवनेन मलयजसमीरेण, उद्दीपकतया उद्विग्ना खिन्ना पथिकवधूः प्रोषितभर्तृका नायिका लोचने सम्मीलयति, निपुणा सखी तु तस्या नायिकायाः कर्णविवरमपि सत्वरं आच्छादयति।

अत्र मा स्म नायिकया पिकपञ्चमालापः श्रूयत, इति कर्णविवरं स्थगयन्त्या विरहिण्या सख्या गूढाभिसंहितोऽर्थः। मलयजसमीरस्येव तस्याप्युद्दीपकत्वाद् वसन्तप्रवृत्तौ कण्ठगताः प्राणा अनेन मार्गेण मायान्तु, इति गूढोर्थ इति कश्चित्।

इत्यर्थगूढजातिः।

अथैकेन स्तुतिनिन्दाम्, द्व्यर्थम्, अपन्हुतिं च लक्षयति—

**स्तुतिनिन्दा तदर्थत्वाद् द्व्यर्थमर्थद्वयोदयात्।**
**निन्हवात् कथितस्यापि शब्दव्याजादपन्हुतिः ॥ २२ ॥**

**स्तुतीति,** तदर्थत्वाद् ते स्तुतिनिन्दे अर्थौ यस्याः सा तदर्था, तस्या भावस्तत्त्वम्, तस्मात्, स्तुतिनिन्दार्थकत्वात् स्तुतिनिन्दा भवति। अयं भावः

---

१—दाहिण-इति क्वचित् पाठः। २—ताए इति क्वचित्।
३—कण्णे विवरेहिं इत्यपरत्र। ४—ढक्केउं इत्यन्यत्र।

यत्रैकस्माद् वाक्यात् स्तुतिर्निन्दा च प्रतीयते : सा स्तुतिनिन्दाख्या जातिः। स्तुतिसहिता निन्दा स्तुतिनिन्दा, मध्यमपदलोपः, तत्प्रतिपादिका जातिरप्युपचाराद् स्तुतिनिन्दा। इदं तु बोध्यम्—अत्र कस्येमे स्तुतिनिन्दे इति प्रत्युत्तरयितुरेव बुद्धिकौशलम्।

**द्व्यर्थमिति,** अर्थद्वयस्य द्वयोरर्थयोः, उदयात् प्रतीतेः, द्व्यर्थम्, द्व्यर्थजातिर्भवति। **निन्हवादिति,** कथितस्य वाचा प्रकटितस्याप्यर्थस्य शब्दव्याजाद् शब्दच्छलेन शब्दस्यार्थान्तरपरत्वप्रतिपादनेन वा, निन्हवात् अपलापात्, अपन्हुतिर्नाम जातिर्भवति।

क्रमश उदाहरति, तत्र पूर्वं स्तुतिनिन्दा यथा—

**बहुदोषो गुणध्वंसी गोहन्ता जनपीडकः।**
**करोतु विरथो लोकमस्तमाप्तगुणोदयम् ॥ २३ ॥**

**बहुदोष इति।** अत्र पद्ये विष्णोः स्तुतिनिन्दे प्रतीयेते। तत्र स्तुतिर्यथा—बहुदोषः बहवो दोषा भुजा यस्य तादृशश्चतुर्भुजः, गुणाः सत्त्वरजस्तमांसि, तान् ध्वंसयति अतिक्रामति इति तथाभूतो गुणत्रयातीतः, गोः धेनुकासुरस्य, हन्ता, जनानां पृथग्जनानां कंसादीनां पीडकः, जनार्दनः, विः पक्षी गरुड इति यावद्, रथो वाहनं यस्य सः, अः विष्णुः, तं राक्षसादिपरिपीडितलोकम्, आप्तः प्राप्तः, गुणोदयः शौर्योदार्यादीनामुपचयो येन तादृशं करोतु। निन्दापक्षे तु बहुदोषः बहुभिर्दोषैः क्रौर्यादिभिर्युक्तः, गुणध्वंसी दयादाक्षिण्यादिगुणगणरहितः, गोहन्ता गवां घातकः, जनपीडकः, विरथो रथरहितः, आप्तगुणोदयं लोकम्, अस्तं नष्टं करोत्वित्यर्थः। अत्र स्तुत्यात्मक एवार्थे प्रतीतिः पर्यवस्यति, निराकाङ्क्षत्वाद्। निन्दात्मकस्त्वर्थ आपाततो झटिति बुद्धिपथमवतरन्नपि न विश्रान्तिं भजते, विशेष्ये साकाङ्क्षत्वात्।

स्तुतिनिन्दाया द्वितीयमुदाहरणं यथा—

**सततमहितजनवत्सलबहुभयपापक्रियापरिभ्रष्टः।**
**इह कलिकाले कुपतिर्जगतस्त्वं परमदुःखकरः ॥ २४ ॥**

**सततमिति,** इह कलिकाले कलियुगे, सततं निरन्तरम्, अहितानां परापकार-

प्रवणानां जनानाम्, वत्सल: प्रियः, वहु भयं यस्मात् तादृशः, पापक्रियया शास्त्रविरुद्धाचरणेन, परिभ्रष्टः पातित्यं प्राप्तः, परमं महत्, दुःखं करोतीति तादृशः, त्वं कुपतिः कुत्सितः पतिः स्वाम्यासि । इति राजनिन्दात्मक एकोऽर्थः। स्तुत्यात्मको यथा—सततं महिताः पूजिता ये जनाः, तेषां वत्सलः सज्जनप्रियः, पापक्रियायाः परिभ्रष्टः पृथग्भूतो निष्पाप इत्यर्थः, त्वं जगतः, परं यथा स्यात्तथा, अदुःखकरः सुखहेतुः, कोः पृथिव्याः पतिः, कुपती राजा असि।

इति स्तुतिनिन्दाजातिः ।

अथ व्यर्थजातिमुदाहरति,

**प्रसन्नवदनः श्रीमानयं लब्धमहोदयः ।**
**करप्रचारसुभगो राजा नन्दयति प्रजाः ॥ २५ ॥**

**प्रसन्नेति,** प्रसन्नं प्रसादयुक्तं वदनं मुखं यस्य सः, श्रीमान् शोभायुक्तः, लब्धः प्राप्तः, महान् उदयः समृद्धिः, येन तथाभूतः, करस्य राजदेयभागस्य प्रचारेण, सुभगः ऐश्वर्यवान्, राजा, प्रजाः, नन्दयति । इति नृपतिवर्णनात्मक एकोऽर्थः ।

प्रसन्नवदनः निर्मलमण्डलः, श्रीमान् कान्तियुतः, लब्धो महोदयः महोद्गमः, येन तथाभूतः,कराणां किरणानां प्रचारेण,सुभगः सर्वजनप्रियः,राजा[1] चन्द्रमाः, प्रजा नन्दयति । इति चन्द्रवर्णनात्मको द्वितीयः ।

अस्या एवापरं हरिहरोभयवर्णनात्मकमुदाहरणं यथा—

**विनायकाहितप्रीतिर्देवो गङ्गां बभार यः ।**
**सर्वदो माधवः सत्वामव्याद्व्यर्थविक्रमः ॥ २६ ॥**

**विनायकेति,** वीनां पक्षिणां नायके गरुडे, आरोहणार्थम् आहिता कृता प्रीतिर्येन तादृशः, यः देवः, अगं गोवर्धनाख्यं गिरिम्, गां पृथ्वीं च बभार धारयामास, सर्वदः सर्वं धर्मार्थकाममोक्षाख्यं चतुर्वर्गं ददाति—इति तादृशः, वामनावतारे त्रिलोक्याक्रमणे अन्वर्थः अनिष्फलः, विक्रमः पराक्रमो यस्य, स माधवः

---

१—राजा प्रभौ च नृपतौ क्षत्रिये रजनीपतौ । इतिमेदिनी ।

माया लक्ष्म्याः, धवः पतिर्विष्णुः, त्वाम्, अव्याद् रक्षेत् । इति विष्णुवर्णनपर-एकोर्थः ।

विनायके, गणपतौ, आहिता, प्रीतिः प्रेम येन सः, यः देवः, गङ्गां भागीरथीम्, बभार स्वजटाजूटमण्डले दधार, अव्यर्थविक्रमः त्रिपुरासुरादिसंहारेऽनिष्फलपराक्रमः सः, उमायाः पार्वत्याः, धवः स्वामी हर इति यावत्, त्वां सर्वदा अव्यात् । इति हरवर्णनपरो द्वितीयः ।

इति द्व्यर्थजातिः ।

अथापन्हुतिमुदाहरति—

**सीत्कारं[1] शिक्षयति[2] व्रणयत्यधरं तनोति रोमाञ्चम् ।**
**नागरिकः किं[3] मिलितो न हि न हि सखि हैमनः पवनः ॥२७॥**

**सीत्कारमिति,** सीत्कारं सीच्छब्दोच्चारणम्, शिक्षयति, अधरम् अधरोष्ठं व्रणयति व्रणयुक्तं करोति, व्रणयतीत्यत्र व्रणवदिति मतुबन्तात् तत् करोतीति णिच्, इष्ठवदित्यतिदेशान् मतुपो लुक् । रोमाञ्चं रोमोद्गमम्, तनोति करोति; इत्येवं ब्रुवाणां नायिकां तत्सखी पृच्छति—किं नागरिको नगरवास्तव्यो विदग्धनायकः, मिलितः सङ्गतः, येनैवं नखक्षतादिविधानेन सीत्कारशिक्षणम्, दन्तनिर्दशनेनाधरव्रणनम्, कुचस्पर्शादिना रोमाञ्चतननं क्रियते ? नायिका च रहस्यमिदं मा भेदीति प्रकारान्तरेण सीत्कारादि समर्थयते—**न हीति,** हे सखि, न हि न हि, नागरिको न मिलितः, अपि तु, हैमनः[4] हेमन्ते भवः अतिशीतलः, पवनः, शीतलपवनस्पर्शेनापि सीत्कारादि जन्यते । तदेवमत्र कथितस्यार्थस्य केनचिद् व्याजेनापन्हवात् कथितापन्हुतिरियम् ।

अस्या एव द्वितीयमुदाहरणं—श्लेषेण यथा—

---

१—पद्यमिदं च्छेकापन्हुतिमुदाहरद्भिरप्पदीक्षितैरपि कुवलयानन्द उदाहृतम् ।

२—'संजनयति' इति क्वचित् पाठः ।

३—'किमु' इति क्वचित् पठ्यते ।

४—'हेमन्तादण् तलोपश्च' ।

रुचिरस्वरवर्णपदा रसभाववती जगन्मनो हरति ।
तत् किं तरुणी,न हि न हि वाणी वाणस्य मधुरशीलस्य* ॥२८॥

रुचिरेति, रुचिरस्वरवर्णपदा—रुचिराणि मनोहराणि, स्वरः कण्ठध्वनिः, वर्णो रूपम्, पदं पदविन्यासो गतिरिति यावद् यस्याः सा, रसभाववती-रसोऽनुरागः, तदनुरूपो भावः मनोविकारः, तद्वती, अथवा रसे शृङ्गारे, भावोऽभिप्रायः, तद्वती शृङ्गारवासनावासितान्तःकरणा, काचिद् जगतां मनो हरति । सा केति जिज्ञासमानः कश्चित् पृच्छति-तदिति, तद् किं तरुणी सा तादृग् विशेषणविशिष्टा किं काचिद् युवतिरस्ति ? यया जगन्मनो ह्रियते, उत्तरति-नहि नहीति, न सा युवतिः,

---

*इयमपन्हुतिर्हिन्दीभाषायामपि 'कहमुकरियां' इति नाम्ना प्रसिद्धा, पाठकानां मनोरञ्जनाय काश्चनेहोदाह्रियन्ते ।

बरस बरस वह देसमें आवे, मुंहसे मुंह लगा रसप्यावे ।
वा खातिर मैं खरचे दाम ऐ सखि ! साजन ना सखि आम ॥ १ ॥
रात समय वह मेरे आवे भोर भए वह घर उठ जावे ।
यह अचरज है सबसे न्यारा ऐ सखि ! साजन ना सखि तारा ॥ २ ॥
नंगे पांव फिरन नहिं देत पांवसे मिट्टी लगन नहिं देत ।
पांव का चूमा लेत निपूता ऐ सखि ! साजन ना सखि जूता ॥ ३ ॥
सारी रैन मेरे संग जागा भोर भए तब बिछुड़न लागा ।
वाके बिछुड़त फाटे हिया ऐ सखि ! साजन ना सखि दिया ॥ ४ ॥
वह आवे तब शादी होय उस बिन दूजा और न कोय ।
मीठे लागैं वाके बोल ऐ सखि ! साजन ना सखि ढोल ॥ ५ ॥
जब मांगूं तब जल भरलावे मेरे मन की तपन बुझावे ।
मनका भारा तनका छोटा ऐ सखि साजन ना सखि लोटा ॥ ६ ॥
जब मोरे मन्दिर में आवे सोते मुझ को आन जगावे ।
पढ़त फिरत वह विरहके अच्छर ऐ सखि ! साजन ना सखि मच्छर ॥ ७ ॥
बेर बेर सोवतहिं जगावै ना जागूं तो काटे खावे ।
व्याकुल हुई मैं हक्की बक्की ऐ सखि साजन ना सखि मक्खी ॥ ८ ॥

किन्तु मधुरशीलस्य मधुरं शृङ्गारं शीलयतीति तादृशस्य शृङ्गाररससिद्धस्य बाणस्य बाणनाम्नो महाकवेः, वाणी, या निरुक्तविशेषणपरिष्कृता सती जगतां मनो हरति, तथाहि-बाणस्य वाण्यपि रुचिरः कर्णसुखदः स्वरो ध्वनिर्यस्यास्तादृशी श्रुतिकटुत्वदोषविवर्जिता, अथवा स्वराणामचां विन्यासो यत्र मनोहरो न तु 'धीरो वीरो विनीतो' इत्यादाविव, श्रवणोद्वेजकः । एवं रुचिरवर्णपदा वर्णानां व्यञ्जनानां पदानां च यत्र रुचिरः सन्निवेशस्तादृशी, रसभाववती विभावानुभावव्यभिचारिभिः परिपुष्टा रत्यादयः स्थायिभावा रसपदभाजः, एवं देवमुनिगुरुपुत्रादिविषया रतिः, प्राधान्येनाभिव्यञ्जितो व्यभिचारी च भावपदभाक् । तद्वती च बाणस्य वाणी । तदेवं विशेषणयोर्वाणीपरत्वव्याख्यानेन पूर्वसूचिततरुणीरूपार्थापन्हवादियमप्यपन्हुतिः ।

इत्यपन्हुतिजातिः ।

अथ बिन्दुमतीमुदाहरति —

स्वरेषु बिन्दुयुक्तेषु हलां यदवबोधनम् ।
तद्बिन्दुमदिति प्राहुः केचिद् बिन्दुमतीमिति ॥ २६ ॥

स्वरेष्विति, स्वरेषु स्वरचिन्हेषु बिन्दुयुक्तेषु सत्सु यद् हलां व्यञ्जनानाम् अवबोधनं प्रकाशनं तद् बिन्दुसंयोगाद् बिन्दुमत् पृष्टमुच्यते, केचिज्जातिविशेषणानुरोधेन बिन्दुमतीमाहुः । अयं स्पष्टो भावः-छन्दो बद्धः स्वरव्यञ्जनसमुदाय एव पद्यं भवति। तथा च यत्र केवलं स्वरान् (अकारादिस्वरचिन्हानि 'ा ि ु' एवं भूतानि) विन्यस्य व्यञ्जनस्थानेषु च बिन्दून् सन्निवेश्य पृच्छयते यत् केऽत्र हल्वर्णास्त्यक्ता-येषां योगे पद्यं पूर्यते, तत्पृष्टं बिन्दुमद् भवति ।

अथोदाहरति—

ि॰ ० ० ० ॰ु ०ा ० ॰ि ॰ि ॰ि ॰ि ॰ो: ॰ु ॰ु ॰ा ॰ि ० ० ः ।
० ० ० ० ० ० ॰ु ॰ृ ०ा ॰ु ० ० ० ॰ी ० ० ॰ो ० ० ० ० ः ॥३०॥

अत्र स्वरचिन्हानि तु प्रकाशितानि, व्यञ्जनस्थानेषु च बिन्दवो दत्ताः । यत्रोत्तराधरभावेन द्वौ त्रयो वा बिन्दवः, तत्र द्वयोस्त्रयाणां वा व्यञ्जनानां संयोगो विवक्षितः । अत्रोत्तरं यथा—

**त्रिनयनचूडारत्नं मित्रं सिन्धोः कुमुद्वतीदयितः ।**
**अयमुदयति घुसृणारुणरमणीवदनोपमश्चन्द्रः ॥**

**त्रिनयनेति,** त्रिनयनस्य महादेवस्य, चूडारत्नं शिखामणिः, सिन्धोः समुद्रस्य, मित्रं सखिभूतम्, (अत एव चन्द्रोदये समुद्रः संचलद्वीचिमालाकुलः सन् हृष्यन्निव भाति) कुमुद्वतीनां कुमुदिनीनां दयितः प्रियः, (रात्रौ चन्द्रोदये एता विकसन्ति) घुसृणेन कुङ्कुमानुलेपनेन अरुणम्, अथवा घुसृणवदरुणमीषद्रक्तं यद्रमणीवदनं तदुपमस्तत्सदृशः, अयमित्यङ्गुल्या निर्देशः, चन्द्रः, उदयति उद्गच्छति ।

इति विन्दुमज्जातिः ।

यद्यपि विन्दुमत्सदृश्योऽन्या अपि मानस्यादिजातयो भवन्ति, तासामपीह प्रसङ्गसङ्गत्या निरूपणं प्राप्तम्, परं न क्रियते, तत्र कारणमाह—

**मानसी नाभसीत्याद्या बुद्ध्यादौ न्यासतो हि याः ।**
**बाहुल्येनाप्रयोगात्तु नेह तासां प्रदर्शनम् ॥ ३१ ॥**

**मानसीति,** याः प्रश्नजातयः, बुद्ध्यादौ बुद्ध्यतेऽनयेति बुद्धिर्मनः, आदिपदान्नभआदि ग्राह्यम् , मनसि नभसि इतरत्र वा न्यासतः सङ्केतस्थापनाद् भवन्ति, ताः 'मानसी' 'नाभसी' इत्याद्या आख्यायन्ते, किन्तु तासां बाहुल्येनाप्रयोगाद् हेतोरिह प्रदर्शनं न कृतम् । तत्र मानस्या उदाहरणं रामप्रपन्नशास्त्रिभिः स्वकुञ्चिकायामुदाहृतमिहास्माभिरपि च्छात्रज्ञानायोदाह्रियते । तत्र पूर्वं मानससंकेतो यथा—

**अचां न्यासस्तथैव स्याद्धलामेव परस्परम् ।**
**अधस्थयुगनिष्ठानां वैपरीत्येन दृश्यताम् ॥**
**झखा कठा गता चडी धढा पंसा यथा बली ।**
**महा घटा फणी राजा नशा छन्दा षभा ङञा ॥**

अयमस्य भावः—मानसप्रश्ने ये 'अचः' स्वराः, ते तथैव स्थाप्याः, व्यञ्जनेषु च द्वितीयकारिकानिर्दिष्टवर्णद्वन्द्वेषु प्रतिद्वन्द्वं वर्णयोः परस्परं वैपरीत्यं कल्पनीयम्, अर्थात्—झस्य स्थाने खकारः, खस्थाने च झकारः, ककारस्थाने ठकारः, ठकारस्थाने च ककारो विज्ञेयः, एवं गकारतकारयोः,

चकारडकारयोः, धकारढकारयोः, पकारसकारयोः, यकारथकारयोः, बकारलकारयोः, मकारहकारयोः, घकारटकारयोः, फकारणकारयोः, रेफजकारयोः, नकारशकारयोः, छकारदकारयोः, षकारभकारयोः, ङकारयकारयोः, परस्परपरिवर्तनं बोध्यम् । एष च संकेतः स्वमनःकल्पित इत्येवास्या मानसीत्वमपि ।

उदाहरणं यथा—

> गग्ज तें तहशं न्जेथः स्जिथे थग्ज लजरा इ्थमम् ।
> अश्थया हे तागिः ठा द्थाग् ग्लल्छिथोता ज्गडेगपः ॥
> तत्र ते गमनं श्रेयः प्रिये यत्र व्रजाम्यहम् ।
> अन्यथा मे गतिः का स्यात् त्वद्वियोगार्तचेतसः ॥

इति चास्योद्धारः, निरुक्तसङ्केतसमन्वयः स्वयमेव द्रष्टव्यः । मनःसङ्केतस्य नानाविधत्वादन्येऽप्यस्या भेदा भवितुमर्हन्ति । एवं नभसि हस्ताङ्गुलिचालन ध्वजप्रकम्पनादिनानाविधसंकेतैर्नाभसी जातिरुत्पद्यते । युद्धादिषु तु प्रायो ध्वजप्रकम्पदर्पणप्रकाशपातनादिनैवाद्यापि परस्परं रहस्यसंदेशाः प्रदीयन्ते ।

अथैकया क्रियागुप्तादि लक्षयति—

> क्रियादिकं स्थितं यत्र पदसंधानकौशलात् ।
> स्फुटं न लक्ष्यते यस्मात् क्रियागुप्तादिकं यथा ॥३२॥

क्रियेति, यत्र पृष्टे स्थितं विद्यमानमपि क्रियादिकम्, आदिपदेन कारकसम्बन्धामान्त्रणादि संग्राह्यम्, पदसंधानकौशलात् पदसन्निवेशचातुर्यात्, यस्मात्, स्फुटं न लक्ष्यते, अतस्तत् क्रियागुप्तादिकं पृष्टमुच्यते । आदिपदेन कारकादिगुप्तसमुच्चयः, तदुक्तमन्यत्र—

> क्रियाकारकसम्बन्धगुप्तान्यामन्त्रितस्य च ।
> गुप्तं तथा समासस्य लिङ्गस्य वचनस्य च ॥

वचनस्येति सुप्तिङन्तवचनस्येत्यर्थः।

तत्र पूर्वं क्रियागुप्तमुदाहरति,

> राजन्नवघनश्याम ! निस्त्रिंशाकर्षदुर्जयः ।
> आकल्पं वसुधामेतां विद्विषो द्य रणे बहून् ॥ ३३ ॥

राजन्निति, अत्र पूर्वार्धे प्रथमपादे 'राजन् ! नवघनश्याम' इति

पदच्छेद आपाततः प्रतीयते । एवमुत्तरार्धे ' विद्विषोद्य ' इत्यत्र ' शिवोऽर्च्यः ' इत्यादिसादृश्येन पूर्वरूपभ्रान्त्या ' अद्य ' इतिच्छेदो भाति । एवं पदच्छेदे व्यवस्थितेऽत्र पद्ये क्रियापदं लुप्तमिव प्रतीयते, एतदेव पदसंधानकौशलम् । वस्तुतस्तु 'राजन्नव' इत्यत्र 'अव' इति पृथक् क्रियापदम् । "ङमो ह्रस्वादचि०" इति ङुडागमे नकारद्वयम्, एवमुत्तरार्धे 'द्य' इति पृथक् क्रियापदम् । तदयमर्थः, हे घनश्याम घनवच्छ्यामवर्ण ! राजन् ! निस्त्रिंशस्य खड्गस्य, आकर्षेण कोशान्निष्कासनमात्रेण, दुर्जेयः त्वम्, एतां वसुधां पृथ्वीम्, आकल्पं कल्पपर्यन्तम्, अव रक्ष । तथा रणे, बहून् विद्विषः शत्रून्, द्य अवखण्डय, 'दो अवखण्डने' दिवादिः, मध्यमपुरुषैकवचनम् । तदिह क्रियागोपानात् क्रियागुप्तम् । अस्यैव द्वितीयं यथा—

पुंस्कोकिलकुलस्यैते नितान्तमधुरारवैः ।
सहकारद्रुमा रम्या वसन्ते कामपि श्रियम् ॥ ३४ ॥

**पुंस्कोकिलेति**; अत्रापि द्वितीयपादे पदसंधानचातुर्याद् मधुरेति समासघटकमारवविशेषणं प्रतीयते, वस्तुतस्तु ' नितान्तम्, अधुः, आरवैः ' इति पदच्छेदः, अधुरिति च क्रियापदम् । तदयमर्थः—वसन्ते, एते, रम्या मनोहराः सहकारद्रुमा आम्रवृक्षाः, पुंस्कोकिलकुलस्य परभृतसमुदायस्य, आरवैः काकलीभिः, नितान्तं निरतिशयम्, कामप्यनिर्वचनीयां श्रियं शोभाम्, अधुः धृतवन्तः । अत्राप्यधुरिति क्रिया गोपिता ।

इति क्रियागुप्तजातिः ।

अथ कारकगुप्तमुदाहरन् पूर्वं क्रमप्राप्तं कर्तृकारकमुदाहरति—

न करोतु नाम रोषं न वदतु परुषं न हन्त्वयं शत्रून् ।
रञ्जयति महीमखिलां तथापि धीरस्य वीरस्य ॥ ३५ ॥

**नेति**, अत्र 'धीरस्य' इत्येकमखण्डं पदं प्रतीयते, संधिचातुर्यात् । तथा च रञ्जयतिक्रियाकर्तृपदं लुप्तमिव भाति । वस्तुतस्तु ' धीरस्य ' इति पदद्वयम्, 'अस्य धीः ' इत्यन्वयः । तदयमर्थः—अयं नृपतिः, रोषं क्रोधं न करोतु नाम, न च परुषं कठोरं किमपि वदतु, न वा स्वशत्रून् हन्तु, तथापि रोषाद्यभावेऽपि, अस्य वीरस्य धीः कर्त्री, अखिलां महीं रञ्जयति । तदिदं धीरितिकर्तृपदगोपनेन कर्तृकारकगुप्तोदाहरणम् ।

अस्यैव द्वितीयं यथा—

शरदिन्दुकुन्दधवलं नगनिलयरतं[1] मनोहरं देवम्।
यैः सुकृतं कृतमनिशं तेषामेव प्रसादयति॥ ३६ ॥

**शरदीति**, अत्रापाततो मनोहरमित्येकमेव पदमाभाति, वस्तुतस्तु मन इति पृथक् प्रथमान्तं प्रसादनक्रियाकर्तृपदम् । तदयमर्थः, यैर्नरैः—अनिशं निरन्तरं सुकृतं पुण्यं कृतमनुष्ठितम्, तेषामेव नराणां मनः कर्तृ, शरत्कालिक इन्दुः शरदिन्दुः, कुन्दो माघ्यं कुसुमम्, तद्वद् धवलम्, नगे कैलाशपर्वते निलयो निवासः, तत्र रतमासक्तम्, हरं महादेवं देवम्, प्रसादयति । मन इति कर्तृगोपनात् कर्तृगुप्तमिदम् ।

अथ कर्मगुप्तमुदाहरति,

सीकरासारसंवाही सरोजवनमारुतः ।
प्रक्षोभयति पान्थस्त्रीनिःश्वासैरिव मांसलः ॥ ३७ ॥

**सीकरेति**, सीकराणाम् अम्बुकणानाम्, आसारो धारासंपातः, तं-संवहति धारयतीति तादृशः शीतल इत्यर्थः, पान्थस्त्रीणां प्रोषितभर्तृकाणां नारीणां विरहव्यथाजनितैर्निःश्वासैरिव, मांसलः परिपुष्टः, हेतूत्प्रेक्षा, जवनो वेगवान्, मारुतो वायुः, सरः तडागं कर्म, प्रक्षोभयति चञ्चलयति । अत्र पूर्वार्धे सरोजानां वनस्य मारुत इत्येतदर्थकं 'सरोजवनमारुतः' इत्येकमेव समस्तं पदं प्रतीयते, तथा च प्रक्षोभणक्रियाकर्मपदं लुप्तमिव भवति । वस्तुतस्तु 'सरः' 'जवनमारुतः' इति पदच्छेदो विवक्षितः । सरश्च प्रक्षोभणस्य कर्म, तदेवं कर्मगोपनात् कर्मगुप्तमिदम् ।

द्वितीयमुदाहरति,

सुभग ! तवाननपङ्कजदर्शनसंजातनिर्भरप्रीतेः ।
शमयति कुर्वन् दिवसः पुण्यवतः कस्य रमणीयः ॥३८॥

**सुभगेति**, अत्र तृतीयपादे 'शम्' इति कुर्वन्निति शत्रन्तस्य कर्मपदम्, तच्च कविना पदसन्निवेशकौशलेन शमयतीत्येकपदभ्रान्तिमापाद्य निगूहितम् । तदयमर्थः—हे सुभग ! हे सुन्दर ! तव, आननपङ्कजस्य मुखारविन्दस्य, दर्शनेन

[1] 'नगपतिनिलयम्' इति क्वचित् पाठः ।

संजाता निर्भरा निरतिशया प्रीतिर्यस्य तादृशस्य, कस्य पुण्यवतः, रमणीयो दिवसः, शं कल्याणं कुर्वन्, अयति गच्छति। 'इटाकिटकटी गतौ' इत्यत्र प्राश्लिष्टस्य 'ई' धातो रूपम्।

अथ करणगुप्तमुदाहरति,

**पूतिपङ्कमयेऽत्यर्थं कासारे दुःखिता अमी।**
**दुर्वारा मानसं हंसा गमिष्यन्ति घनागमे ॥ ३९ ॥**

**पूतीति,** अत्र 'दुर्वाराः' इति हंसविशेषणं खलन्तप्रयोग आपाततः प्रतिभाति, वस्तुतस्तु 'दुर्वारा' इति 'दुष्टेन वारा जलेन' इत्येतदर्थकं गमनक्रियायां करणम्, कविना श्लेषेण गोपितम्। तदयमर्थः—घनागमे वर्षर्तौ, पूतिपङ्कमये दुर्गन्धकर्दमबहुले, कासारे सरसि, अत्यर्थं दुःखिताः, अमी हंसाः, दुर्वारा दुष्टजलेन हेतुना, मानसं तदाख्यं सरः, गमिष्यन्ति।

अस्यैव द्वितीयं यथा—

**अहं महानसायातः कल्पितो नरकस्तव।**
**मया मांसादिकं भुक्तं भीमं जानीहि मां बक ! ॥ ४० ॥**

**अहमिति,** अत्र प्रथमपादे 'महानसायातः' इति 'महनसात् पाकालयाद्, आयातः' इत्येतदर्थकं समस्तमेकपदं प्रतीयते। परं न तद् गूढाभिसन्धेः कवेर्विवक्षितम्; किन्तु महानसा महता शकटेन, आयातः, इत्यर्थपरं पदद्वयमसमस्तम्। तथा च 'महानसा' इति यानक्रियाकरणं कविना पदविन्यासकौशलेन निगूहितम्। तदयमर्थः—हे बक ! बकासुर ! तव भोजनाय, कल्पितः, नरको लघुनरः, अल्पार्थे कन्, अहम्, महानसा महाशकटेन, आयातोऽस्मि। 'नृकरः' इति पाठेऽपि 'तव भोजनाय करत्वेन कल्पितो ना नरः' इति स एवाभिप्रायः। मदतिरिक्तं यद् मांसादिकं त्वदुपभोज्यमासीत्, तन् मया भुक्तम्, मां भीमं जानीहि। एकचक्रापुरीवासिभिर्बकासुराय तद्भोजनार्थं प्रत्यहमेको नरः, भक्ष्यान्तरं च प्रतिज्ञातमासीदिति महाभारतीयबकासुरवधोपाख्यानतोऽवसेयम्।

सम्प्रदानगुप्तमुदाहरति,

**अम्भोरुहमये स्नात्वा वापीपयसि कामिनी।**
**ददाति भक्तिसम्पन्ना पुष्पं सौभाग्यकाम्यया ॥ ४१ ॥**

**अम्भोरुहेति,** अत्र 'अम्भोरुहमये' इति मयट्प्रत्ययान्तं सप्तम्यन्तं

वापीपयोविशेषणमापाततः प्रतिभाति, वस्तुतस्तु पदद्वयमिदम् 'अम्भोरुहम्, अये' इति च। तत्र 'अये' इति इशब्दस्य चतुर्थ्यन्तं रूपं ददातिक्रियायां सम्प्रदानीभूतम्, तच्च कविना पदविन्यासकौशलेन साधु निगूहितम्। श्लोकार्थस्त्वयम्—काचित् कामिनी स्त्री, वापीपयसि, स्नात्वा, सौभाग्यकाम्यया सौभाग्यप्राप्तीच्छया, अये इः कामः, तस्मै, भक्तिसम्पन्ना सती, अम्भोरुहं कमलपुष्पं ददाति, कामं कमलेनार्चयतीत्यर्थः।

अस्यैव द्वितीयं यथा—

***प्रशस्त्यायुक्तमार्गस्थ तव सम्मानिताश्रित।**
**स्पृहयन्ति न के नाम गुणरत्नालय प्रभो ॥४२॥**

**प्रशस्त्येति**, अत्र 'प्रशस्त्यायुक्तमार्गस्थ' इति पदं 'प्रशस्त्या प्रशंसया, आ समन्ततः, युक्ते मार्गे तिष्ठतीति तादृशः' इत्येतदर्थकमेकं पदं प्रतीयते, वस्तुतः 'प्रशस्त्यै, उक्तमार्गस्थ' इति पदद्वयमिदम्, 'एचोयवायावः' इत्यैकारस्यायादेशः, अत एवैकपदभ्रान्तिः, तत्र **'प्रशस्त्यै'** इति चतुर्थपादगतायाः स्पृहणक्रियायाः †संप्रदानम्, कविना सन्धिचातुर्याद् गोपितम्। तदयमर्थः—हे उक्तमार्गस्थ उक्ते विधिबोधिते मार्गे तिष्ठतीति तादृशः, हे विहितानुष्ठानकर्तरित्यर्थः, हे सम्मानिताश्रित! सम्मानिताः समादृता आश्रिताः स्वोपजीविनो येन तादृशः; सम्बुद्धौ विभक्तिलोपः। हे गुणरत्नालय! हे शौर्यौदार्यादिगुणरूपाणां रत्नानाम् आकर! प्रभो स्वामिन्, तव प्रशस्त्यै प्रशंसायै, के नाम न स्पृहयन्ति, सर्वेऽपि त्वां स्तोतुं कामयन्त इत्यर्थः।

अथापादानगुप्तमुदाहरति,

**शिलीमुखैस्त्वया वीर दुर्वारैर्निर्जितो रिपुः।**
**बिभेत्यत्यन्तमलिनो वनेऽपि कुसुमाकुले ॥४३॥**

**शिलीमुखैरिति**, हे वीर! त्वया दुर्वारैः दुरतिक्रमैः, शिलीमुखैः बाणैः, निर्जितः, रिपुः, त्वद्भीत्या कुसुमाकुले पुष्पैर्व्याप्ते, वने, आहिण्डमानः, ‡अलिनः भ्रमरादपि, अत्यन्तं बिभेति। शिली शल्यं मुखे येषां ते शिलीमुखाः, यथा बाणाः

---

*—'प्रशान्त्या' इति क्वचित् पाठः। †—'स्पृहेरीप्सितः' इति संप्रदानत्वम्।
‡—मधुलिण्मधुपालिन इत्यमरः।

शल्याग्रतया शिलीमुखा उच्यन्ते, तथैव भ्रमरा अपि शल्यवत्तीक्ष्णमुखतया शिलीमुखा* व्यपदिश्यन्ते, तथा च सादृश्याद् बाणभ्रान्त्या भ्रमरादपि भयं सञ्जच्छत एव। अत्र 'अलिनः' इति पञ्चम्यन्तमपादानं† कविना पदसन्निवेशकौशलेन निगूहितम्, 'अत्यन्तमलिनः' इत्यस्य अत्यन्तश्चासौ मलिनश्चेति विग्रहेणापाततो रिपुविशेषणतयापि योजयितुं शक्यत्वात्।

अपादानगुप्तस्य द्वितीयनिदर्शनं यथा—

**सरसीतोयमुद्धृत्य जनः कन्दर्पकारकम्।**
**पिबत्यम्भोजसुरभि स्वच्छमेकान्तशीतलम् ॥४४॥**

**सरसीति,** अत्र 'सरसीतोयम्' इति 'सरस्याः तोयम' इति विग्रहेणैकं समस्तं पदं प्रतीयते, 'कन्दर्पकारकम्' इत्यपि चैकपदतद्विशेषणत्वेन प्रतीयमानं पूर्वां प्रतीतिं द्रढयति। इत्थंच 'उद्धृत्य' इत्युद्धरणक्रियावधिभूतमपादानपदमन्विष्यमाणमपि न लभ्यते, लुप्तमिव तिष्ठति। वस्तुतस्तु सरसीतोयमिति पदद्वयम्, सरसीतः, अयमिति पदच्छेदः, कन्दर्पकारकमित्यपि 'कम्' 'दर्पकारकम्' इत्येवं छेदेन पदद्वयमेव, तत्र 'सरसीतः' इति उद्धरणक्रियाया अपादानम्, यच्च कविना पदसन्निवेशचातुर्येण गोपितम्, तदयमत्र श्लोकार्थः—

अयं जनः, सरसीतः तडागात्, दर्पकारकं तृप्तिकरम्, अम्भोजसुरभि कमलसम्बन्धेन सुगन्धि, स्वच्छं निर्मलम्, एकान्तशीतलम् अत्यन्तशीतम्, ‡कं जलम्, उद्धृत्य पिबति।

अथाधिकरणगुप्तमुदाहरति—

**या कटाक्षच्छटापातैः पवित्रयति मानवम्।**
**ए कान्ते रोपितप्रीतिरास्ति सा कमलालया ॥४५॥**

**येति,** अत्र रहसीत्यर्थकम् 'एकान्ते' इत्येकमेव पदमापाततो भाति। वस्तुतस्तु पदद्वयमिदं, तत्र 'ए' इति अशब्दस्य सप्तम्यन्तं रूपमस्तिक्रियाया आधिकरणकारकं कविना चातुर्यादेकपदभ्रान्तिजननेन गोपितम्। 'कान्ते' इति च तद्विशेषणम्। तदयं पद्यार्थः—या, कटाक्षच्छटापातैः नेत्रापाङ्गनिरीक्षणैः, मानवं

---

* अलिबाणौ शिलीमुखौ इत्यमरः। † 'भीत्रार्थानां भयहेतुः' इत्यपादानत्वम्।
‡ सुखशीर्षजलेषु कम् इति मेदिनी।

पवित्रयति, सा कमलालया कमलम् आलयो यस्याः सा लक्ष्मीः, कान्ते स्वप्रेयसि, ५ विष्णौ, रोपिता कृता, प्रीतिः यया तादृशी अस्ति ।

अस्यैव द्वितीयं यथा—

**विपद्यमानता दृष्टा सर्वस्यैव निरूष्मणः ।**
**तथा हि भस्म पादाभ्यां निर्वाणं हन्त्ययं जनः ॥४६॥**

**विपद्येति,** अत्र 'विपद्यमानता' इत्यापाततः शानच्प्रत्ययान्तस्य पदेस्तलन्तं रूपं प्रतीयते, ' निरूष्मणस्तेजःशून्यस्य सर्वस्यैव विपद्यमानता विपत्तिपात्रता दृष्टा ' इत्यर्थोऽपि तथा स्वीकारे सम्यग् घटते, वस्तुतस्तु ' विपद्यमानता ' इति नैकं पदम्, अपि तु 'विपदि' 'अमानता' इति पदद्वयम्, तत्र **'विपदि'** इति दर्शनक्रियाया कर्मद्वारकम् आधिकरणं यच्च कविना स्वकौशलेन साधु निगूहितम् । तदयमर्थः—निरूष्मणो निस्तेजस्कस्य, सर्वस्यैव जनस्य, विपदि विपत्तौ, अमानता मानहीनत्वं तिरस्कारः, दृष्टा, तथा हि—अयं जनः लोकः, निर्वाणं शान्तमग्निशून्यं भस्म पादाभ्यां हन्ति ।

इति कारकगुप्तजातिः ।

अथ सम्बन्धगुप्तमुदाहरति,

**तूणीव मधुमासेऽस्मिन् सहकारद्रुमञ्जरी ।**
**इयमुद्भिन्नमुकुलैर्भाति न्यस्तशिलीमुखा ॥ ४७ ॥**

**तूणीवेति,** अत्र 'उद्भिन्नमुकुलैः' इति एकमेव पदमापाततः प्रतिभाति, वस्तुतस्तु पदद्वयमिदम्, 'उद्भिन्नमुकुला' 'एः' इति च पदच्छेदः, तत्र **'एः'** इति कामदेवबोधकस्य * ' इ ' शब्दस्य षष्ठ्या रूपम्, तच्च कविना सन्धिचातुर्यात् सम्यङ् निगूहितम् । श्लोकार्थस्त्वयम्—अस्मिन् प्रत्यक्षमनुभूयमाने, मधुमासे चैत्रमासे, उद्भिन्नानि विकसितानि, मुकुलानि कलिकाः, यत्र तादृशी, न्यस्ताः शिलीमुखा भ्रमराः, तूणीपक्षे वाणाश्च, यत्र तथाभूता, इयं पुरोदृश्यमाना, सहकारद्रोः आम्रवृक्षस्य, मञ्जरी, एः कामस्य, तूणीरवद्, भाति शोभते ।

अस्यैव द्वितीयमुदाहरणं यथा—

**प्राप्तमदो मधुमासः प्रबला रुक् प्रियतमोऽपि दूरस्थः ।**
**असतीयं सन्निहिता हा हतशीला सखी नियतम् ॥४८॥**

---

*—इकार उच्यते काम इत्येकाक्षरः ।

**प्राप्तेति,** अत्र 'प्राप्तमदः' 'मधुमासः' इति मिथो विशेष्यविशेषणभावापन्नं पदद्वयमापाततः प्रतीयते, 'प्राप्तो मदश्चित्तविकृतिर्येन तादृशो मधुमासो वसन्तमासः' इत्यर्थयोजनापि सम्यग्घटते, परं वस्तुतो नैतत् पदद्वयम्, अपि तु पदचतुष्टयम्, प्राप्तम्, अदः, मधुः, मासः, इति पदच्छेदः तत्र **'मासः'** इति सान्तस्य माश्शब्दस्य जन्यजनकभावसम्बन्धे षष्ठ्यन्तं रूपम्, यच्च कविना पदविन्यासचातुर्येण निगूहितं श्रोतारं भ्रामयति। श्लोकार्थस्त्वयम्--अदः मधु मद्यं प्राप्तम्, मासः वसन्तमासजनिता प्रबला, रुक् कामपीडा च अस्ति, प्रियतमः कामपीडाचिकित्सकः पतिरपि, दूरस्थः, तदियं सन्निहिता पार्श्ववर्तिनी, असती असत्स्वभावा, मे सखी, नियतं नूनम्, हतशीला दुर्वृत्ता भविष्यतीति हा खिन्नास्मीति भावः।

इति सम्बन्धगुप्तजातिः।

अथ क्रमप्राप्तमामन्त्रितगुप्तमुदाहरति,

**सर्वज्ञेन त्वया किञ्चिन्नास्त्यविज्ञातमीदृशम्।**
**मिथ्यावचस्तथापि त्वमसत्यं वेत्सि न क्वचित्॥ ४९॥**

**सर्वज्ञेनेति,** अत्र, 'सर्वज्ञेन' इत्यापाततः त्वयेत्यस्य विशेषणं तृतीयान्तं प्रतीयते, वस्तुतः 'हे सर्वज्ञानाम् इन स्वामिन्' इत्येतदर्थकं सम्बोधनविभक्त्यन्तं पदमिदम्, अथवा हे 'सर्वज्ञ!' हे 'इन!' इत्येवं पदद्वयं बोध्यम्, तच्च कविना तृतीयान्तभ्रान्तिमुत्पाद्य गोपितम्। अयं च पद्यार्थः—हे सर्वज्ञानां समस्तचराचरवस्तुवेदिनाम्, इन स्वामिन्, ईदृशं किञ्चिदपि नास्ति यत् त्वया अविज्ञातम् अविदितम्, तथापि त्वं मिथ्यावचः असत्यवचनम्, क्वचिदपि, असत्यं न वेत्सि, असत्यं न बुध्यसे। इत्यहो आश्चर्य्यम्।

अस्यैव द्वितीयमुदाहरणं यथा—

**कमले! कमले नित्यं मधूनि पिबतस्तव।**
**भविष्यति न सन्देहः कष्टं दोषाकरोदये॥ ५०॥**

**कमल इति,** अत्र 'कमले कमले' इति वीप्सायां द्विरुक्तं सप्तम्यन्तमाभाति, प्रतिकमलमिति तदर्थः। वस्तुतस्तु प्रथमं 'कमले' इति नैकपदम्, अपि तु पदद्वयम्, 'कम्' 'अले' इतिच्छेदः, तत्र 'अले' इत्यामन्त्रितं कविना वीप्साद्विरुक्तसप्तम्यन्तभ्रान्त्यापादनेन निपुणं निन्हुतम्। द्वितीयन्तु 'कमले' इति पदं सप्तम्यन्तमेव।

तदयमर्थः—हे अले हे भ्रमर ! कमले कं सुखं यथा स्यात् तथा, नित्यं मधूनि पुष्परसं पिवतः, तव, दोषाकरस्य चन्द्रमसः, उदये, कष्टं भविष्यति, कमलमुद्रणेन तत्रैव निरोधात् पुष्परसालाभाद् वेति भावः, अत्र सन्देहो नास्ति ।

इत्यामन्त्रितगुप्तम् ।

अथ समासगुप्तमुदाहरति—

**विषादी भैक्ष्यमश्नाति सदारोगं न मुञ्चति**
**रुष्टेनापि त्वया वीर शम्भुनाऽरिः समः कृतः ॥ ५१ ॥**

**विषादीति,** हे वीर ! त्वया रुष्टेनापि रोषवताऽपि, अरिः स्वशत्रुः, शम्भुना महादेवेन, समः तुल्यः, कृतः । रोषवन्तोऽहि स्वशत्रून् निघ्नन्ति, त्वं तु तान् शम्भुतुल्यतां नयसीति विरोधोऽपिना सूच्यते । तथा हि तव शत्रुः, विषादी विषादो दुःखं तद्वान् , महादेवोऽपि विषमत्तीति विषादी, समुद्रमथनात् प्राप्तं कालकूटविषं महादेवेनैव पीतमिति पुराणम् । भैक्ष्यं भिक्षान्नमश्नाति, महादेवोऽपि तथा । किं च सदा रोगं चिन्तादिजनितम् आधिं क्षुत्पिपासादिकृतं व्याधिं च न मुञ्चति, महादेवश्च सदारः दारसहितः, भगवत्या पार्वत्या सह, अगं कैलासपर्वतं न मुञ्चति । अत्र 'विषादी' 'सदारोगम्' अनयोः पदयोः महादेवपक्षार्थसूचकः समासः कविना श्लेषेण गोपितः ।

अस्यैव द्वितीयं यथा—

**नित्यमाराधिता देवैः कंसस्य द्विषतस्तनुः ।**
**मण्डलाग्रं गदां शङ्खं चक्रं जयति बिभ्रती ॥ ५२ ॥**

**नित्यमिति,** नित्या मा लक्ष्मीर्यत्र सा नित्यं श्रिया शोभिता, देवैः, आराधिता * समुपासिता, मण्डलाग्रं नन्दकाख्यं खड्गम् , गदां कौमोदकीनाम्नीम् , शङ्खं पाञ्चजन्याभिधम् , चक्रं सुदर्शनाभिधानम् , बिभ्रती धारयन्ती, †कंसस्य द्विषतः कंसारेः, नारायणस्य, तनुः, शरीरम्, जयति सर्वोत्कर्षेण वर्तते ।

---

*—कौक्षेयको मण्डलाग्रः करवालः कृपाणवद् इति खड्गनामस्वमरः ।

† 'द्विषः शतुर्वा' इति विकल्पेन षष्ठी ।

अत्र 'नित्यमा' शब्दे नित्या मा यत्रेति बहुव्रीहिः कविना 'नित्यं देवैराधिता' इत्येवमर्थप्रत्यायकशब्दयोजनया साधु निगूहितः ।

इति समासगुप्तम् ।

अथ लिङ्गगुप्तमुदाहरति—

**नितान्तस्वच्छहृदयं सखि प्रेयान् समागतः ।**
**त्वां चिराद् दर्शनप्रीत्या यः समालिङ्ग्य रंस्यते ॥ ५३ ॥**

**नितान्तेति,** हे सखि ! नितान्तं स्वच्छं हृद् मनो यस्य सः, अयं तव प्रेयान् अतिशयेन प्रियः स्वामी, समागतः, यः चिराद् बहुकालानन्तरं दर्शनप्रीत्या दर्शनजनितप्रेम्णा, त्वां समालिङ्ग्य समाश्लिष्य, रंस्यते ।

अत्र कविना हे सखि ! तव प्रेयान् 'नितान्तं स्वच्छं हृदयं यथा भवति तथा समागतः' इत्येवं क्रियाविशेषणप्रत्यायनेन, 'नितान्तस्वच्छहृत्, अयम्' इति पुल्लिङ्गं गोपितम् ।

अस्यैव द्वितीयं यथा—

**कलिकालमियं यावदगस्त्यस्य मुनेरपि ।**
**खण्डयति मनः कोऽहं शशिखण्डानुकारिणी ॥ ५४ ॥**

**कलिकेति,** शशिखण्डानुकारिणी चन्द्रकलासदृशी वक्रा इयम् ,अगस्त्यस्य अगस्त्यवृक्षस्य,कलिका कुड्मलम् , यावत् मुनेरपि मनः, अलं खण्डयति अतिशयेन विकृतिं नयति, कोऽहम्, मम मनः खण्डयेदित्यत्र तु किमु वक्तव्यमिति भावः ।

अत्रापि कविना 'इयं नारी कलिकालं यावत् अगस्त्यस्य मुनेरपि मनः खण्डयति' इत्येवं योजनान्तरप्रत्यायनेन, अगस्त्येतिश्लिष्टपदप्रयोगेण च 'कलिका' इति स्त्रीलिङ्गं गोपितम् । कलिकालमिति, अत्यन्तसंयोगे द्वितीया । पूर्वोदाहरणे विशेषणं गोपितम्, अत्र तु विशेष्यमिति विशेषः ।

इति लिङ्गगुप्तम् ।

अथ वचनगुप्तमुदाहरति । तत्र वचनं द्विविधं सुब्वचनं तिङ्वचनं च । तत्र पूर्वं सुब्वचनगुप्तं यथा—

**प्रमोदं जनयत्येव सदारा गृहमेधिनः ।**
**यदि धर्मश्च कामश्च भवेतां संगताविमौ ॥ ५५ ॥**

**प्रमोदमिति,** यदि धर्मश्च कामश्चेति इमौ संगतौ मिलितौ भवेतां परस्पराविरोधेन निषेव्येताम्, तर्हि+रा धनम्, गृहमेधिनः गार्हस्थ्यमाश्रितस्य सदा प्रमोदम् आनन्दं जनयत्येव। अत्र आपाततः 'सदाराः' इति शब्दः दारैः सह वर्तमाना इत्येतदर्थकः प्रथमान्तः प्रतीयते, तत्सम्बन्धाद् गृहमेधिन इत्यपि प्रथमान्तं तद्विशेष्यमाभाति, तथा चैवं कविना पदप्रयोगचातुर्येण 'राः' इति प्रथमैकवचनं गोपितम्। वस्तुतस्तु गृहमेधिन इति प्रमोदसम्बन्धे षष्ठी। 'सदा' 'राः' इतिचासमस्तं पदद्वयम्। सुबन्तवचनगोपनात् सुब्वचनगुप्तमिदम्।

अथ तिङ्वचनगुप्तमुदाहरति—

**कस्मात्त्वं *दुर्बलासीति सख्यस्तां† परिपृच्छति।**
**त्वयि सन्निहिते तासु दद्यात् किं कथयोत्तरम्॥ ५६॥**

**कस्मादिति,** काचिन्नायिका प्रियेण दौर्बल्यकारणं पृष्टा सखीषु विद्यमानासु लज्जया नोत्तरं प्रतिपेदे, तत्रोत्तराप्रतिपत्त्या संविग्नमानसं नायकं दूती प्राह—हे सन्निहित! 'त्वं कस्माद् दुर्बलाऽसि' इति त्वयि तां नायिकां परिपृच्छति सति सा नायिका आसु सखीषु विद्यमानासु किमुत्तरं दद्याद् इति कथय, अतः हे सख्यः! यूयम् इत अपसरत। अत्र 'इत' इति एतेर्लोटि मध्यमपुरुषबहुवचनं गोपितम्। केचित्तु-त्वं कस्माद्, हेतोः, दुर्बला असि, इति सख्यः, तां नायिकां परिपृच्छति पुनः पुनरतिशयेन पृच्छन्ति, परं सा नायिका नायकसन्निधानजनितत्रपापरवशा न किमप्युत्तरं प्रतिपेदे, अतः दूती नायकमाह-त्वयि सन्निहिते सति सा आसु सखीषु किमुत्तरं दद्यात्, इति कथय। लज्जया सा न प्रतिवक्तुं प्रभवति, अतस्त्वम् अस्मात् स्थानाद् अत अन्यत्र गच्छ, अत्र परिपृच्छतीत्यतः परितः पृच्छतीत्येकवचनप्रतीत्या बहुवचनं गुप्तम्, प्रच्छेः यङ्लुकि प्रथमपुरुषबहुवचने परिपृच्छतीतिरूपासिद्धेः, इति व्याचक्षते। परमत्र मते 'परिपृच्छति' इति व्याकरणलक्षणहीनम्, श्तिपाशपेति परिभाषया ग्रहिज्येति संप्रसारणाप्रवृत्तौ रिको ऽप्रवृत्तेः।

इति वचनगुप्तम्।

---

+ 'हिरण्यद्रविणद्युम्नमर्थरैविभवा अपि' इति धननामस्वमरः।

* दुर्बलोसिति क्वचित् पाठः, † 'त्वाम्' इति क्वचित् पाठः।

अथ मात्राच्युतकाद्युदाहर्तुं तल्लक्षणमाह—

**अन्योऽप्यर्थः स्फुटो यत्र मात्रादिच्युतकेष्वपि ।**
**प्रतीयते विदुस्तज्ज्ञा स्तन्मात्राच्युतकादिकम् ॥ ५७ ॥**

**अन्य** इति, यत्र पद्य मात्रादीनां मात्राविन्दुविसर्गाक्षरस्थानव्यञ्जनानां च्युतकेषु च्यवनं च्युतं तदेव च्युतकं निष्कासनमित्यर्थः, तेषु सत्स्वपि मात्रादीनां त्यागेऽपि, अन्योऽप्यर्थः यथाश्रुतार्थादतिरिक्तोऽर्थोपि स्फुटः सन् प्रतीयते, तत् तज्ज्ञा मात्रादिच्युतिकोविदाः मात्राच्युतकादिकं विदुः ।

तत्र पूर्वं मात्राच्युतकमुदाहरति,

**महाशयमतिस्वच्छं नीरं संतापशान्तये ।**
**खलवासादतिश्रान्ता समाश्रयत हे जनाः ॥ ५८ ॥**

**महाशयेति,** हे जनाः ! यूयं खलवासात् खलो धान्यमर्दनस्थानं चत्वरं वा तत्र वासाद् अतिशयेन श्रान्ताः खिन्नाः सन्तः, संतापस्य घर्मादिजनितस्य शान्तये, महाशयं गभीरम् अतिस्वच्छं च नीरं जलं समाश्रयत । एष पद्यस्य यथाश्रुतोर्थः, अत्र **'नीरम्'** इति पदाद् यदि ' ई ' कारस्य निष्कासनं क्रियेत तर्हि अकारसंयोगेन 'नरम्' इति व्यवस्थिते द्वितीयोऽर्थोऽपि स्फुटं प्रकाशते, तथाहि-खलैः दुष्टैः सह वासाद् अतिश्रान्ता दुःखिता हे जना यूयं संतापशान्तये कामादिमानसदुःखनिवृत्तये, महाशयम् उदारहृदयम्, अतिस्वच्छं मनसा कर्मणाचाति निर्मलं नरं समाश्रयत ।

अस्यैव द्वितीयं यथा—

**तुषारधवलः स्फूर्जन् महामणिधरो घनः[1] ।**
**नागराजो जयत्येकः पृथिवीधरणक्षमः ॥ ५९ ॥**

**तुषारेति,** तुषारवद्, हिमवद् धवलः, स्फूर्जतः प्रकाशमानस्य, महामणेः धरो धारकः, घनः दृढः, पृथिव्या धरणे क्षमः समर्थः,एकः अनुपमः,नागानां राजा शेषः,जयति सर्वोत्कर्षेण वर्त्तते,इति यथाश्रुतोर्थः । **'नागराज'** शब्दात् प्रथमाकारच्युतौ 'नगराजः' इति व्यवस्थिते द्वितीयोप्यर्थः स्फुटति, तथाहि—तुषारैर्हिमैर्धवलः

१—क्वचिद् 'अनघः' इतिपाठः ।

स्फूर्जतां प्रकाशमानानां महामणीनां धरः, घनः कठिनः, पृथिवीधरणक्षमः, एको नगानां पर्वतानां राजा हिमालयः, जयति ।

अथ बिन्दुच्युतकमुदाहरति—

**सुश्यामा चन्दनवती कान्ता तिलकभूषिता ।**
**कस्यैषानङ्गभूः प्रीतिं भुजङ्गस्य करोति न ॥ ६० ॥**

**सुश्यामेति,** सुश्यामा षोडशवार्षिकी, चन्दनवती चन्दनचर्चिता, तिलकेन भूषिता समलङ्कृता, अनङ्गस्य कामस्य, भूः उत्पत्तिकारणम्, अथवा अनङ्गभूः मन्मथवती, एषा कान्ता स्त्री, कस्य भुजङ्गस्य* विटस्य प्रीतिं न करोति, अपि तु सर्वस्यापि करोति, एष पद्यस्य यथाश्रुतोऽर्थः । 'एषानङ्गभूः' इत्यत्र अनुस्वारस्य ( ङकारस्य ) च्युतौ 'एषा नगभूः' इत्येवं शब्दविन्यासे च द्वितीयोप्यर्थः स्फुटं प्रतीयते । तथाहि--सुश्यामा वृक्षबाहुल्याद् अतिशयेन हरिद्वर्णा, चन्दनवती चन्दन-वृक्षयुता, कान्ता मनोहारिणी, तिलकैस्तिलक†वृक्षैश्च विभूषिता विमण्डिता, एषा नगस्य मलयपर्वतस्य, भूः भूमिः, कस्य भुजङ्गस्य सर्पस्य, प्रीतिं न करोति ।

अस्यैव द्वितीयमुदाहरणं यथा—

**यथा सत्प्रसवः स्निग्धः सन्मार्गविहितस्थितिः ।**
**तथा सर्वाश्रयः सत्यमयं मे बकुलद्रुमः ॥ ६१ ॥**

**यथेति,** अयं मे बकुलद्रुमः केसरवृक्षः, यथा सन्तः प्रसवाः पुष्पाणि यस्य तादृशः, स्निग्धः प्रियः, सन्मार्गे पान्थानां यातायातमार्गे विहिता स्थितिरवस्थानं यस्य तादृशश्चास्ति, तथा सत्यं सर्वेषां घर्मादिसंतप्तानां पान्थानामाश्रयः अस्ति । इति यथाश्रुतोर्थः । अत्रापि चतुर्थपादे 'अयं' शब्दाद् बिन्दुच्युतौ 'अयमेव कुलद्रुमः' इत्येवं रचनायां द्वितीयोप्यर्थः स्पष्टं भासते । तथाहि—यथा अयं सत्प्रसवः सदपत्यः, स्निग्धः सर्ववत्सलः, सन्मार्गविहितस्थितिः महाजनानुशीलिते पथि प्रवृत्तः, अस्ति,

---

* वेश्यापतिर्भुजङ्गश्च षिङ्गः पाल्लविको विटः-इत्यमरः । † तिलको द्रुमरोगाश्वभेदेषु तिलकालके-इति मेदिनी ।

१—स्यादुत्पादे फले पुष्पे प्रसवो गर्भमोचने-इत्यमरः ।

तथा विज्ञायते, यत् सत्यम् अयमेव सर्वाश्रयः कुलद्रुमः स्वकुले द्रुम इव वृक्षसदृशः। सर्वाश्रयप्रदानाद् वृक्षत्वारोपः ।

इति बिन्दुच्युतकम् ।

अथ विसर्गच्युतकमुदाहरति,

**महीरुहा विहङ्गानामेते हृद्यैः कलापिनाम् ।**
**विरुतैः स्वागतानीव नीरवाहाय कुर्वते ॥ ६२ ॥**

**महीरुहा** इति, एते महीरुहा वृक्षाः कलापिनां विहङ्गानां मयूरपक्षिणां हृद्यैः प्रियैः, विरुतैः शब्दैः केकाभिरित्यर्थः, नीरं वहतीति नीरवाहो मेघः, तस्मै, स्वागतानीव कुर्वते तदागमनमभिनन्दन्तीव । अत्र 'हृद्यैः' इति शब्दाद् विसर्गच्युतौ 'हृद्यैकलापिनाम्' इत्येकं समस्तं पदं व्यवतिष्ठते । हृद्यम् एकं लपन्तीति हृद्यैकलापिनः, तेषां मनोहारि कूजतामित्यर्थः, विहङ्गविशेषणम् । अन्यत् समानम् ।

अस्यैव द्वितीयं यथा—

**अगस्त्यस्य मुनेः शापाद् ब्रह्मस्यन्दनमास्थितः ।**
**महासुः खात् परिभ्रष्टो नहुषः सर्पतां गतः ॥ ६३ ॥**

**अगस्त्येति,** महान्तः असवो यस्य स महासुः महाप्राणो महाबलः, ब्रह्मस्यन्दनमास्थितः * ब्रह्मभिर्ब्राह्मणैः मरीच्यादिसप्तर्षिभिः ऊढं स्यन्दनं रथं शिविकाम्, आस्थित आरूढः, नहुषः नहुषाख्यो नृपतिः,अगस्त्यस्य मुनेः शापात्, खाद् द्युलोकात् परिभ्रष्टः, सर्पतां गतः, सर्पत्वं प्राप । अत्र ' महासुः ' इति शब्दाद् विसर्गे निःसारिते ' महासुखात् ' इत्याकारं नूतनं पदं भवति, तस्य च महच्च तत् सुखं महासुखं तस्माद् इन्द्रपदरूपाद् महत ऐश्वर्याद् ' इत्येवमर्थान्तरमपि स्पष्टं प्रतीयते ।

कदाचिद् ब्रह्महत्यया स्वपदभ्रष्टस्येन्द्रस्य पदं नहुषो लेभे । इन्द्रपदं प्राप्य संजातमदः स शचीमिन्द्राणीं चकमे, सा तु ' यदि सप्तर्षिभिरुह्यमानं यानमारुह्य मदन्तिकमागच्छसि तदा त्वां वृणोमि ' इति तं नहुषं प्रत्यवोचत् । नहुषोऽपि प्रभुत्वमदेनागस्त्यादिप्रमुखान् महर्षीन् स्वशिविकां वोढुमादिदेश, तेऽपि तथाकुर्वन्,कामाग्निसंतप्तो नहुषो मध्येमार्गमगस्त्यमृषिं त्वरया

*—ब्रह्मा विप्रः प्रजापतिरित्यमरः।

चलितुं 'सर्प सर्प' इत्येवं प्रेरयत् । तथा सति ऋषिश्चुक्रोध 'सर्पो भव' इति तं शशाप च इति पौराणिकमितिवृत्तम् ।

इति विसर्गच्युतकम् ।

अथाक्षरच्युतकमुदाहरति,

**महानपि सुधीरोऽपि बहुरत्नयुतोऽपि सन् ।**
**विरसः कुपरीवारो नदीनः केन सेव्यते ॥ ६४ ॥**

**महानिति,** महानपि अत्यन्तविस्तृतोऽपि, सुधीरोऽपि मर्यादानतिक्रामकोऽपि, बहुभी रत्नैर्युतोऽपि, विरसः विरुद्धरसयुक्तः निरतिशयक्षारः, कुपरीवारः कुत्सितं नक्रमकरादिजन्तुजालं परिवारो यस्य तथाभूतः, सन् नदीनः नदीनाम् इनः स्वामी समुद्रः, केन सेव्यते, केनापि नेत्यर्थः, इति पद्यस्य यथाश्रुतोऽर्थः । चतुर्थपादे **नदीन**शब्दाद् आदिनकारच्युतौ तु अर्थान्तरमपि स्फुटं प्रतीयते । तथाहि— महानपि लोक आद्रियमाणोऽपि, सुधीरोपि विद्वानपि, बहुरत्नयुतोऽपि बहुधनवानपि, सन् , विरसः रसोऽनुरागः प्रेमेतियावत् , तच्छून्यः अत्यन्तक्रूरः, अथवा विरसः असहृदयः, कुपरिवारः कुत्सितकुटुम्बः कुत्सितगोष्ठीचारी वा, दीनः प्रकृत्या कृपणो जनः, केन सेव्यते आश्रीयते, न केनापीत्यर्थः ।

अस्यैव द्वितीयं यथा—

**सुशीलः स्वर्णगौराङ्गः पूर्णचन्द्रनिभाननः ।**
**सुगतः कस्य न प्रीतिं तनोति हृदि संस्थितः ॥६५॥**

**सुशील इति,** सुशीलः, स्वर्णगौराङ्गः सुवर्णवद् गौरशरीरः, पूर्णचन्द्रनिभं पूर्णचन्द्रसदृशम्, आननं मुखं यस्य तादृशः, हृदि, संस्थितः ध्येयतया अवस्थितः, सुगतो बुद्धः, कस्य प्रीतिमानन्दं न तनोति । इति यथाश्रुतोर्थः । अत्र '**सुगतः**' इति शब्दाद् गकारच्युतौ 'सुतः' इति पदेनार्थान्तरं प्रतीयते । विशेषणानि प्रायः तुल्यानि । सुतपक्षे 'हृदि संस्थितः' इत्यस्य गुणैः सर्वेषां हृद्य इत्यर्थः । हृदयाश्लिष्ट इति वा ।

इत्यक्षरच्युतकम् ।

अथ स्थानच्युतकमुदाहरति—

> तनोतु ते* यस्य फणी मुरारिः†
>
> पाणौ गरुत्मान्‡ दयितास्ति¶ शय्या।
>
> नाभ्यां§ स्फुरन् भद्रमशुभ्रदेहः
>
> पद्मा गतिश्चक्रमसौ ∸विरिञ्चिः ॥६६॥

**तनोत्विति,** यस्य फणी शेषनागः, शय्या, गरुत्मान् गरुडः, गतिः गमनसाधनं वाहनम्, पद्मा लक्ष्मीः, दयिता प्रिया, यस्य पाणौ हस्ते, चक्रम्, नाभ्यां स्फुरन् प्रकाशमानः, असौ विरिञ्चिः ब्रह्मा, अस्तीति सर्वत्रान्वेति, सः अशुभ्रः श्यामः देहः, यस्य तथाभूतः, मुरारिः नारायणः, ते तव, भद्रं कल्याणम्, तनोतु । अत्र परस्परान्वयिनां पदानां झटित्यन्वयप्रतीतियोग्यस्थानेऽपाठात्, स्थानच्युतकमिदम् । स्थानं च्युतं यत्रेति विग्रहः ।

अस्यैव द्वितीयं यथा—

> हरः क्षयी तापकरः सुरेशः
>
> शान्तो हरिर्गोत्ररिपुर्विवस्वान् ।
>
> चन्द्रो द्विजिह्वाश्रित इत्युपेक्ष्य
>
> लक्ष्मीवृतः पातु विधि× र्जगन्ति ॥

**हर इति,** हरः शिवः, द्विजिह्वैः सर्पैः, आश्रितः, चन्द्रः क्षयी बहुलपक्षे प्रत्यहं क्षयशीलः, अथवा क्षयो राजयक्ष्मा तद्वान्, सर्वतः प्रथमं चन्द्रस्यैव यक्ष्मा समजनिष्टेति वैद्यकविदः, विवस्वान् सूर्यः, तापकरः, तेजोमयपिण्डत्वात्, सुरेशः देवराज इन्द्रः, गोत्ररिपुः गोत्राः ‡ शैला एव गोत्रं कुलम्, तद्रिपुः शत्रुः, विधिः ब्रह्मा, शान्तः अतिवृद्धत्वात् शिथिलेन्द्रियः, इति हेतोः, लक्ष्म्या ( एतान् हरादीन् अनादृत्य ) वृतः पतित्वेन स्वीकृतः, हरिः जगन्ति, पातु रक्षतु । इदमपि परस्परान्वयिपदानां योग्यस्थानच्युतेः स्थानच्युतकम् ।

इति स्थानच्युतकम् ।

---

* नो, † गरुत्मान्, ‡ मुरारिः, ¶ च, इति पुस्तकान्तरे पाठाः । अर्थः स एव । § नाभौ । ∸ विधाता इति क्वचित् पाठभेदः । अर्थस्तु न भिद्यते । ×'रविः' इति क्वचित् पाठः । ‡ अद्रिगोत्रगिरिग्रावाचलशैलशिलोच्चयाः, संततिर्गोत्रजननकुलानि इति चामरः

अथ व्यञ्जनच्युतकमुदाहरति—

**भिक्षवो रुचिराः सर्वे* सुरसाः सुजनप्रियाः ।**
**क्षमायामभिसंपन्ना दृश्यन्ते मागधे † परम् ॥ ६८ ॥**

**भिक्षव इति,** मागधे मगधदेशे, सर्वे भिक्षवो बौद्धभिक्षुकाः, रुचिराः स्वसद्वृत्तैर्मनोहराः, सुरसाः त्यागादियोग्यविषयकत्वाच्छोभनः, रसः अनुरागो येषां तादृशाः, अत एव सुजनानां सतां प्रियाः श्रद्धेयाः, क्षमायां सहिष्णुतायाम्, परमत्यर्थम् , अभिसंपन्नाः निरताः, दृश्यन्ते । अत्र **भिक्षवः**, इति पदाद् भकार-व्यञ्जनच्युतौ 'इक्षवः' इत्यनेन पदेनार्थान्तरमपि स्फुटं प्रतीयते । तथाहि—मागधे, रुचिराः सुस्वादवः, सुरसाः मिष्टरसाः, सुजनाप्रियाः, क्षमायां पृथिव्याम् , अभिसम्पन्ना वृद्धिं गताः, इक्षवः पुण्ड्रकाः, परमत्यर्थं दृश्यन्ते ।

अस्यैव द्वितीयं यथा—

**सत्यशीलो दयोपेतो दाता शुचिरमत्सरः ।**
**जिनः सर्वात्मना सेव्यः पदमुच्चैरभीप्सता ॥ ६९ ॥**

**सत्यशीलेति,** सत्यं सत्यभाषणमेव शीलं स्वभावो यस्य तादृशः, दयया उपेतः युक्तः, दाता दानशीलः, शुचिः पवित्रः, अमत्सरः अन्यशुभद्वेषरहितः, ‡जिनः बुद्धः, उच्चैः उन्नतम् , पदम् ,अभीप्सता प्राप्तुमिच्छता, जैनेन, सर्वात्मना सर्वैः प्रकारैः, सेव्यः ।

अत्र '**जिनः** इति पदाद् जकारच्युतौ 'इनः' इति पदेनापि पद्यार्थः साधु सङ्गच्छते । इनः स्वामीत्यर्थः । विशेषणान्युभयत्र तुल्यानि ।

अथ च्युतदत्ताक्षरं लक्षयति—

**स्फोटयित्वाक्षरं किञ्चित् पुनरन्यस्य दानतः ।**
**यत्रापरो भवेदर्थश्च्युतदत्ताक्षरं हि तत् ॥ ७० ॥**

**स्फोटेति,** किञ्चिद् अक्षरं व्यञ्जनं स्फोटयित्वा निस्सार्य, पुनः, अन्यस्य अक्षरान्तरस्य दानतः निवेशात्, यत्र अपरः श्रुतार्थाद् अतिरिक्तः, अर्थः भवेद् भासेत, तद् च्युतदत्ताक्षरं नाम काव्यम्। च्युतं दत्तं चाक्षरं यत्रेति संज्ञाविग्रहः ।

---

*—सर्वरसाः सर्वजनप्रियाः इति क्वचित् पाठः । †—मगधे इति क्वचित् ।

‡—माराजिल्लोकजिज्जिनः इति बुद्धनामसु अमरः ।

अथोदाहरति—

**सदागतिहतोच्छ्रायस्तमसो वशतां गतः ।**
**अस्तमेष्यति दीनोऽयं विधुरेकः *शिवं स्थितः ॥ ७१ ॥**

**सदेति,** सदागत्या निरन्तरदेशान्तरगमनागमनेन, हतोच्छ्रायः हतो नष्टः, उच्छ्रायः उन्नतिर्यस्य तादृशः, तमसो मोहस्य, वशताम् अधीनताम्, गतः, अयं दीनः पुरुषः, अस्तं नाशम्, एष्यति प्राप्स्यति। विधुरे विपत्तौ, कः शिवं कल्याणं यथा स्यात् तथा स्थितः । न कोपीत्यर्थः । अथवा सदागत्या निरन्तराकाशभ्रमणेन हतोच्छ्रायः, †तमसो राहोः, वशताम्, गतः, दीनः दक्षशापात् क्षयमुपगतः, एकः असहायः, शिवं स्थितः महादेवं श्रितोपि, अयं विधुः, अस्तमेष्यतीत्येवं योज्यम् । अत्र '**दीनः**' इति पदाद् नकारे निष्कासिते, तत्स्थाने च पकारे निवेशिते 'दीपः' इतिपदेनापरार्थोऽपि समुल्लसति । तथाहि–‡सदागतिर्वायुः, तेन हतः नष्टः, उच्छ्रायः प्रकाशः, यस्य तादृशः, अत एव तमसो ऽन्धकारस्य, वशतां गतः, अयं दीपः, अस्तं निर्वाणम्, एष्यति, विधुरे कः शिवं स्थितः। इति पूर्ववत् ।

अस्यैव द्वितीयं यथा—

**पूर्णचन्द्रमुखी रम्या कामिनी निर्मलाम्बरा ।**
**करोति कस्य न स्वान्तमेकान्तमदनातुरम् ॥ ७२॥**

**पूर्णेति,** पूर्णचन्द्रवन्मुखं यस्याः सा, रम्या रमणीया, निर्मलानि अम्बराणि वस्त्राणि यस्यास्तादृशी, कामिनी स्त्री, कस्य पुरुषस्य, स्वान्तं मनः, एकान्तम् अत्यन्तम्, मदनेन कामेन, आतुरम् आर्तं न करोति । अपि तु सर्वस्यापि करोति। अत्र '**कामिनी**' पदात् ककारे निष्कासिते तत्स्थाने च यकारे प्रवेशिते निष्पन्नेन 'यामिनी' शब्देनापि पद्यार्थः संगच्छत एव । तथाहि– पूर्णश्चन्द्रः मुखे प्रारम्भे यस्याः

---

*—शिवे स्थितः इति क्वचित् पाठः ।    † तमस्तु राहुः, इत्यमरः ।

‡—मातरिश्वा सदागतिः इति वायुनामस्वमरः ।

अथवा पूर्णचन्द्र एव मुखं यस्याः, तादृशी रम्या, निर्मलं मेघादिराहितम् अम्बरम् आकाशं यस्यां तथा भूता च यामिनी, कस्य स्वान्तमेकान्तमदनातुरं न करोति ।

इति च्युतदत्ताक्षरम् ।

*कृतिस्तुधर्मदासस्य †सौगतस्य तपस्विनः ।
विदग्धानां मुखाम्भोजप्रविकासकरी परा ॥७३॥

इति बौद्धश्रीधर्मदाससूरिविरचितविदग्धमुखमण्डनाख्य-
काव्यालङ्कारशास्त्रे चतुर्थः परिच्छेदः ।

वेदवस्वङ्कचन्द्राब्दे विदग्धमुखमण्डनी
टीका समाप्तिमगमद् वैदग्धमुखमण्डनी
प्रीयतामनया दिव्या देवी सुरसरस्वती
सुधास्वादीयसी यस्या निरेति रसनिर्भरी ।

इति श्रीपरमेश्वरानन्दशर्मकृतायां विदग्धमुखमण्डनव्याख्यायां
चतुर्थः परिच्छेदः ।

समाप्तश्चायं ग्रन्थः ।

शुभम् ।

*—इदमुपसहार पद्यं क्वचिद्धस्तलिखितेषु पुस्तकेषु नोपलभ्यते । †—सुगतो बुद्धः स भक्तिर्भजनीयो यस्य स सौगतस्तस्येति विग्रहः । बुद्धधर्मानुयायिन इत्यर्थः । 'सर्वज्ञः सुगतो बुद्धः' इति बुद्धनामस्वमरः ।

## कारिकावलीसहित
## न्याय सिद्धान्त मुक्तावली

दर्शनाचार्य कवितार्किक पं० नृसिंहदेव शास्त्री रचित विस्तृत संस्कृतटिप्पण तथा प्रश्नोत्तरावली समेत सजिल्द। १॥)

## न्यायसिद्धान्तमुक्तावली कारिकावली सहित

दर्शनाचार्य कवितार्किक पं० नृसिंहदेव रचित विस्तृत प्रभा नाम संस्कृत व्याख्या सहित सजिल्द। ४॥)

## काव्यादर्श

दर्शनाचार्य कवितार्किक पं० नृसिंहदेवजी कृत कुसुम-प्रतिमा संस्कृत व्याख्या सहित सजिल्द। ३॥)

## नूतन शिवराजविजयपताका

( शिवराजविजयस्य विस्तृत संस्कृत व्याख्या ) २॥)

मिलने का पता—

**मेहरचन्द लक्ष्मणदास**

**संस्कृत पुस्तकालय**

**सैदमिट्ठा बाज़ार, लाहौर।**

## चक्रबन्धः ( १ )
( पृष्ठ ६९ )

करङ्कुकोककुररकलहंसकराम्बितः ।
सरोजकोमलोद्गारनीरसंसक्तमारुतः ॥

## पद्मबन्धचित्रम् ( २ )
( पृ० ७० )

कर्णिकाक्षर श्लिष्टम्

## काकपदबन्धचित्रम् ( ३ )
( ७२ पृष्ठ )

## गोमूत्रिकाबन्धचित्रम् (४)

(पृष्ठ ७२)

अजरामशुभाचारबलिशीलविनोदिता ।
भुजङ्गमनिभासारकलिकालजनोचिता ॥

## सर्वतोभद्रचित्रम् (५)

(पृ० ७७)

| | | |
|---|---|---|
| वी | हा | रा |
| हा | रा | वी |
| रा | वी | हा |

हारावी ।

## साधारणशृङ्खलाबन्धचित्रम् ( ६ )

( पृ० ८६ )

| | प | | यो | | ध | | र | | स | | म | | यः |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|

पयोधरसमयः ।

## एकान्तरशृङ्खलाबन्धचित्रम् (७)

( पृ० ८७ )

नीरापकारेण ।

# नागपाशचित्रम् (८)

(पृष्ठ ८६)



तारकाविराहिता

## प्रकारान्तरेणं नागपाशचित्रम् ( ६ )

( पृष्ठ ६० )

# विशारद श्रेणी १९३० के लिये ग्रन्थ

**प्रथम पत्र—१-अभिज्ञान शाकुन्तलम्**-पं० जीवानन्दकृत संस्कृत टीका सहित दुष्प्राप्य

**अभिज्ञान शाकुन्तलम्**-सटीक निर्णयसागर १॥)

**अभिज्ञान शाकुन्तलम्**-अभिरामा व्याख्या सहित सचित्र मदरास ३)

**अभिज्ञान शाकुन्तलम्**-ग्रष्टभाषावर्ति श्रीनिवासाचार्य प्रणीतया शाकुन्तल व्याख्या राघवभट्टकृतार्थद्योतनिकया टीकया च समलंकृतम् सजिल्द मुम्बई ३)

**अभिज्ञान शकुन्तला**-भाषा टीका सहित १॥)

**२—महाकाव्य संग्रह**-श्रीयुत पं० गिरिधरशर्मा संगृहीत सजिल्द दो भाग। यही परीक्षा में नियत है दूसरा मत खरीदें अन्यथा परीक्षा में अनुत्तीर्ण होने का संदेह है क्योंकि टीका में से भी प्रश्न आजाते हैं और टीका परीक्षा में पं० गिरिधरशर्मा जी की ही नियत है। टीका के सम्बन्ध में कुछ कहने की आवश्यकता नहीं। महा० पं० गिरिधर शर्मा जी जैसे विद्वान् जिस पुस्तक के टीकाकार हों उनके ग्रन्थ में अश्रद्धा रखना विद्यार्थियों की कितनी भूल है यह हम नहीं कह सकते। कपड़े की पक्की जिल्द का मूल्य ३॥)

**द्वितीयपत्र—शिवराज विजय**-पं० अम्बिकादत्त व्यास कृत मूलमात्र बनारस २)

**नूतनशिवराजपताका**-यह पं० नृसिंहदेवजी विरचित शिवराज विजय की संस्कृत टीका है। टीका ऐसी सरल तथा उपयोगी बनी है कि क्या कहना। इसमें गुण, दोष, अलङ्कार, रीति आदि साहित्य के उपयुक्त विषयों को कठिन स्थलों पर भले प्रकार स्पष्ट कर दिया गया है। योग्य स्थलों पर व्याकरण की छटा भी भले प्रकार दर्शाई गई है। कोषादि के प्रमाण से भी अर्थ का वैशद्य कर दिया गया है। विद्यार्थियों को शिवराजविजय समझना कठिन हो रहा था इसीलिये इस टीका की रचना हुई है। २॥)

**नोट**-शिवराजविजय मूल तथा टीका दोनों इकट्ठी कपड़े की पक्की विलायती जिल्द सहित हमसे खरीदिए मूल्य कुल ४।) रु० आठ आने से कम में कोई ऐसी सुन्दर जिल्द नहीं बांध सकेगा।

**तृतीयपत्र—न्यायसिद्धान्तमुक्तावली** मूलमात्र तथा कवितार्किक पं० नृसिंहदेव-जी शास्त्री दर्शनाचार्यकृत विस्तृत संस्कृत टिप्पण 'सरला' नामक विवृति सहित ऐसी उपयोगी टिप्पण आज तक नहीं बनी। अक्षर स्थूल हैं। विद्यार्थियों के सुभीते के लिये "प्रश्नावली" भी लगा दी गई है। वह सब दिक् प्रदर्शनी रीति के अनुसार प्रत्येक पृष्ठ में संगृहीत है। गुजराती प्रेस वाली आवृत्ति से बहुत बढ़ चढ़ कर बनी है मूल्य १॥)

**न्यायसिद्धान्तमुक्तावली** पं० नृसिंहदेव कृता अति सरला विस्तृत प्रभा टीकोपेता सम्पूर्ण ४) विद्यार्थियों से ३॥)

**नोट**—स्त्रियों के लिये तृतीयपत्र में मनुस्मृति ३—६ अध्याय तक नियत है, सटीक २॥)

**चतुर्थपत्र—साहित्य दर्पण**—पं० जीवानन्द कृत व्याख्या ४॥)

**साहित्य दर्पण**—विश्वनाथ कवि प्रणीत श्रीरामचरण तर्कवागीश भट्टाचार्य कृत टीका सहित बम्बई ४)

**२—विदग्धमुखमण्डन** सटीक पं० परमेश्वरानन्दजी प्रिंसिपल सनातनधर्म संस्कृतकालेज लाहौर कृत विस्तृत तथा सरल एवं उपयोगी संस्कृत व्याख्यासहित १)

**नोट**—चतुर्थपत्र में स्त्रियों के लिए भगवद्गीता श्रीधरी टीका नियत है १)

**पंचमपत्र—सिद्धान्त कौमुदी**—बालमनोरमा नामा संस्कृत टीका सहित। दो जिल्द सम्पूर्ण २०) तथा **सिद्धान्त तत्त्वबोधिनी**—व्याख्या सहित ६।)

**सिद्धान्त कौमुदी**—सटिप्पण साजिल्द मुम्बई ४) तथा पं० ज्वालाप्रसाद कृत भाषा टीका सहित १५)

**नोट**—परीक्षा में सिद्धान्त कौमुदी पूर्वार्द्ध भाग समास तक तथा उत्तरार्द्ध चुरादि तक नियत किया है फक्किका परीक्षा में नहीं है १९३० की परीक्षा में से सरला कौमुदी महा अशुद्ध तथा बहुत बेढंगी होने के कारण उड़ा दी गई है।

**षष्ठपत्र**—हिन्दी से संस्कृत में और संस्कृत से हिन्दी में अनुवाद तथा प्रस्ताव (प्रस्तावों के लिए हमारी **'प्रस्ताव चन्द्रिका'** अति उपयोगी है १॥) विद्यार्थियों से १।)

## विशारद के लिये वैकल्पिक हिन्दी परीक्षा पत्र।

**प्रथमपत्र—१—तुलसी रामायण**—अयोध्या कांड ॥।)

**२—सत्य हरिश्चन्द्र**—भारतेन्दु हरिश्चन्द्र विरचित ≡)

**द्वितीयपत्र—१—साहित्यलता गुच्छा** १॥) **२—नवनिधि**—प्रेमचंद रचित ॥।)

**३—हिन्दी में निबन्ध** (हिंदी निबन्ध शिक्षा उपयोगी है) ॥≈)

**पता—मेहरचंद लक्ष्मणदास संस्कृत पुस्तकालय,**
**सैदमिट्ठा बाज़ार, लाहौर**

# यदि

आपको प्राज्ञ विशारद शास्त्री संस्कृत परीक्षाओं और रत्न (प्राफी-शेंसी) भूषण (हाई प्राफीशेंसी) तथा प्रभाकर (आनर्ज़) हिन्दी परीक्षाओं की एवं अन्य सर्व प्रकार और सर्व स्थानों की संस्कृत तथा हिन्दी पुस्तकों की आवश्यकता पड़े तो निस्संकोच भाव से नीचे लिखे पता पर आर्डर भेजने की कृपा करें। अन्य बुकसेलरों की अपेक्षा आपको माल सस्ता और सुथरा मिलेगा।

निवेदक—

## मेहरचन्द लछमणदास।

संस्कृत पुस्तकालय, लाहौर

903.

Kaur, a neighbour, took charge of her. She was first introduced to Lal Chand with whom later on she was married. She has got a son as the result of her marriage with Lal Chand. Shanti Kaur was paid Rs. 700 for the marriage. She and Lal Chand lived at Kemalia happily, but later Lal Chand contracted intimacy with a Christian woman who insisted on her being sent away. She was, consequently, sent back to Sham Devi.

A few months, after this occurrence, she was re-married at Khem Karan by the accused with L. Tara Chand, who paid the sum of Rs. 2,500 to the accused. At the time of marriage she was given out to be a Bunjahi Khatri while she is as Arora girl by caste. Under pain of death, she was forced not to disclose any facts relating to her former life.

The warrants have been issued against the accused.

*Lorry Accident.*—One Sat Pal, a boy of about 12 years, was run over by a lorry near the civil hospital yesterday. He was immediately removed to the hospital. One of his thighs has been injured.

---

Pedestrian: One who walks, or the owner of a second-hand motorcar.

---

Girls, it has been decided, are more musical than boys. We certainly prefer them to accompany us.

---

Evolution :—

When Grandma was a Flapper She dressed like Mother Hubbard. But Grandma's Flapper daughter Dresses more like her cupboard.

years are even to-day
the ideal marriage
many an orthodox
heterodox reformer,
of the Gurukula, 24
minimum marriage-
"sna ka," birth-
eration in marriage,
terms of perfect
born untouchable and
to him vedic evan-
mption of the depres-
modern *shudhi*, are
innovations.

arda was a pioneer
isation of Hindi,
ers, recognised as the
f India. Of his own
, the *Sad Dharama*
arged first the voca-
script too. To his
edit of demonstrating
ility of imparting
ghest standard in
to take advantage
thods of education
scheme of studies the
ge 11.)

external security
present at all events,
t. Let that be re-
ield is open to every
To refuse to re-
decline discussion on
asis is merely to cause
into the hands of
only too anxious to
ning back the clock

---

Meerut, Mr. Asaf Ali, Barrister Hafiz Abdul Aziz and Raza Mirza pleaders Mr. Jugal Kishore argued for the crown. In all 700 witnesses were examined both for the prosecution and the defence.

The Special Magistrate, it is expected. will take two weeks for the preparation of the judgment.

There are 96 accused in one case and 50 n the second case and two accused in the hird case.

## DISTURBANCE NEAR SARDANA.

New Delhi, March 27.

Report of a disturbance at Sardana near Meerut has been received by Mr. Ismail Khan M. L. A. Details are lacking!

(Continud from col. 1.)

Speeds on, as well as above, the ocean are being doubled and trebled. (Only recently a Frenchman, Jean Paul Michel, astonished London with a strange craft, half seaplane, half submarine, which he brought up the Thames to Putney. He claims that it will cross the Atlantic in sixty hours. It is driven by two propellers in the bows, and glides over the waves like a ski over snow. In fact, it is equipped with skis underneath to assist its smooth running.

This "Greyhound of the Sea," or seaplane-glider, as it is called, skims over the water at 100 m. p. h. It carries no fuel, except a small reserve for emergencies. Instead, it has a special device by which it extracts sodium from the sea as it travels and converts this element into gas.

November
letter ever
ority of the
ame route.
afterwards
a fleet of
the 10,000-
England to
sheets of
rry fifteen

he air child
bly attain
itudes than
t. Already;
been deve-
at will rise

al machines
its as a
rarefied
ns. Trained
by oxygen
rolled from
e changing
ies.
y, are being
a hundred
ng Canada
South Africa
ys away, and

of our fore-
, looks even
time when
nger-carrying
y as steam
s that such
n 1,000 and
weigh 1,000

the result. I speak [illegible] when I say that the Nationalist Party and Zaghlul, [illegible] would have negotiated with the Mission within three weeks of its arrival in Cairo on exactly the same terms as in the following year they negotiated in London.

These terms were a frank recognition of the special interests which Great Britain has in Egypt and an open field for the discussion of all else. On these main lines our minds were made up from the beginning, and all that the boycott did was to make it difficult to communicate our views to the Nationalist leaders, and to postpone the negotiations for a year.

That postponement and the circumstances attending it were wholly to the disadvantage of Egypt, and the suspicion and bitterness that were aroused went far to prevent the report receiving fair consideration when it was issued.

I am not suggesting that the Egyptian and Indian questions are parallel. Egypt never was and India is a part of the British Empire; Egypt is a relatively small and homogeneous country; India a great continent with many different races and nationalities.

The Indian is vastly the greater problem, and the risks attending experiments with it proportionately heavier. But if these difficulties are borne in mind there is sufficient parallel between the two cases to make comparison useful. In both there are certain essentials which cannot be broken down by any agitation or boycott.

For the part that we play in India and for India—whether in regard to its

while 18 or
regarded
able age
and even
for the gradu
years is alrea
abile age T
caste is no
He has live
equality with
even non-Hi
gelisation and
sed, two aspec
no novelties.

Swami Shra
too of the
which he wi
national langu
popular Urdu
*Pracharaka*,
lulary, and t
*Kula* belongs
first the pr
instruction t
Hindi. While
of the mode
and including

internal uni
—there is,
no substitu
cognised, a
sort of di
cognise it
the only p
delay and
diehards w
find reaso
in India.